विबुधैरिति ॥ दारुणैः क्रूरैः । प्राणान्तिके कर्मणि नियोगादिति भावः । विबुधैर्देवैः । अनभिज्ञत्वं च ध्वन्यते । यस्य मच्चरणस्य परिकर्मणि प्रसाधने । 'परिकर्म प्रसाधनम्' इत्यमरः । असमाप्ते सति स्मृतोऽसि तमिमं दक्षिणेतरं वामं मे चरणं निर्मितरागं रचितलाक्षारागं कुर्वन्नागच्छ ॥

"Come [ and ] make this [ lit., other than the right ] left foot of mine, [one] with its dying completed [lit., produced], this [ foot ], while yet the decoration of which was incomplete, you were remembered by the cruel gods.—19.

अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयिणी भवामि ते ।
चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे दिवि ॥ २० ॥

अहमिति ॥ अहं पतङ्गवर्त्मना शलभमार्गेण । अग्निप्रवेशेनेत्यर्थः । 'पतङ्गः शलभे चाग्नौ मार्जारेऽर्के शरे खगे' इति वैजयन्ती । एत्यागत्य पुनस्तेऽङ्काश्रयिण्युत्सङ्गवर्तिनी भवामि संप्रत्येव भविष्यामि । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । हे प्रिय, दिवि स्वर्गे चतुरैः सुरकामिनीजनैरप्सरोगणैर्यावन्न विलोभ्यसे विलोभयिष्यसे । 'यावत्पुरानिपातयोर्लट्' इति लट् ॥

"Coming by the path of [ that is, laid down by ] the moth, I shall be [ one ] resorting to your lap again, oh dear, so long as you are not lured [ away ] by the skilled hosts ( *janaih* ) of the celestial damsels in heaven.—20

मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितेति मे ।
वचनीयमिदं व्यवस्थितं रमण त्वामनुयामि यद्यपि ॥ २१ ॥

मदनेनेति ॥ हे रमण, त्वामनुयामि यद्यप्यनुगमिष्याम्येव । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । 'यद्यपीत्यवधारणे' इति केशवः । किंतु रतिर्मदनेन विनाकृता । वियोजिता सतीत्यर्थः । सुप्सुपेति समासः । क्षणमात्रं जीविता किलेतीदं वचनीयं निन्दा मे मम व्यवस्थितं स्थिरमभूत् ॥

"Rati, bereft of Madana, they say ( *kila* ), lived [ may be, just ] for a moment," this censure in regard to me, has

got itself firmly established, oh sweet, though, to be sure (*yadyapi*) I [shall] follow you [in death, immediately]. 21.

क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया ।
सममेव गतोऽस्यतर्कितां गतिमङ्गेन च जीवितेन च ॥ २२ ॥

क्रियतामिति ॥ परलोकेऽन्तरितस्य व्यवहितस्य । मृतस्येत्यर्थः । ते तव मयान्त्यमण्डनं कथं केन प्रकारेण क्रियताम् । क्रियतामित्यत्र कामचारे लोट् बोध्यः । हुतदग्धस्य ते यथेच्छमण्डनमपि न संभवतीत्यर्थः । कुतः । अङ्गेन च जीवितेन च समं सहैवातर्कितामविचारितां गतिं गतोऽसि । इह मृतशरीरमपि नास्ति कस्य मण्डनमिति भावः ॥

"How can the last decoration [*i. e. funeral rites*] of you screened from me by the other world, be effected by me? [For,] with your body and life simultaneously, you have reached a state (*gati*, lit., course), never before imagined.—22.

ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मितां कथां नयनोपान्तविलोकितं च यत् ॥२३॥

ऋजुतामिति ॥ शरमृजुतामार्जवं नयत उत्सङ्गे निषण्णमङ्कगतं धनुर्यस्य तस्य । 'धनुषश्च' इत्यनङादेशः । ते तव मधुना वसन्तेन सह । 'मधुर्दैत्ये वसन्ते च चैत्रे च' इति विश्वः । सस्मितां कथामालापं तथा यन्नयनोपान्तविलोकितमपाङ्गवीक्षणम् । त इत्यनुषङ्गः । तत् स्मरामि ॥

"[Well do] I *remember the conversation, accompanied* by a smile with Madhu [Spring], and [that] which (*yat*) [was a] glance through the corner of the eye of you, with the bow resting in your lap, as you were straightening [lit., leading to the condition of being straight] the arrow.—23.

क नु ते हृदयंगमः सखा कुसुमायोजितकार्मुको मधुः।
न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥२४॥

केति ॥ हृदयं गच्छतीति हृदयंगमो हृद्यः । खच्प्रकरणे 'गमेः सुप्युपसंख्यानम्' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । ते तव सखा कुसुमैरायोजितमारचितं कार्मुकं येन कार्मुकनिर्माता मधुर्वसन्तः क नु क वा । गत इति शेषः । अथवा सोऽप्युग्ररुषा तीव्रकोपेण पिनाकिनेश्वरेण सुहृदा मदनेन गतां प्राप्तां गतिम् । भस्मतामित्यर्थः । न गमितः खलु न प्रापितः किम् । 'जिज्ञासानुनये खलु' इत्यमरः ॥

"Where indeed is your bosom-friend, Madhu, who fashioned [ your ] bow with flowers ? May I know (khalu), whether he too has not been made by the possessor of Pināka [Lord S'ankara] of fierce anger, to reach the state undergone by his friend ?"—24

अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवाहतः।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥ २५ ॥

अथेति ॥ अथ तैः परिदेविताक्षरैर्विलापवचनैर्हृदये दिग्धशरैर्विषलिप्तमुखैः शरैरिवाहतः सन् । 'विषाक्ते दिग्धलिप्तकौ' इत्यमरः । मधुर्वसन्त आतुरामापन्नां रतिमभ्युपपत्तुमनुग्रहीतुम् । आश्वासयितुमित्यर्थः । 'अभ्युपपत्तिरनुग्रहः' इत्यमरः । आत्मानं पुरोऽदर्शयत् । आविरभूदित्यर्थः ॥

Then Vasanta struck at heart by those words [lit., syllables] of lamentation, as though by arrows smeared with poison (dighdhaih) showed himself up in front, to console the distressed Rati.—25.

तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥ २६ ॥

तमिति ॥ सा रतिस्तं मधुमवेक्ष्य दृष्ट्वा भृशं रुरोद । स्तनौ संबाध्य स्तनसंबाधम् । 'परिक्लिश्यमाने च' इति णमुल् । उरो जघान ताडितवती च ।

तथाहि । स्वजनस्याग्रतो दुःखं विवृतमपसारितं द्वारं कपाटं यस्य तदिवोपजायते आविर्भवति । उच्छृङ्खलं प्रवर्तत इत्युत्प्रेक्षाभिप्रायः ॥

On seeing him, she wept excessively ( bhris'am ) and beat her bosom, [ thereby ] having pained her breasts ( stanasambādham ). As is well known ( hi ), grief in the presence of one's relatives becomes as though [that] which has its doors thrown open.—26

इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ।
तदिदं कणशो विकीर्यते पवनैर्भस्म कपोतकर्बुरम् ॥ २७ ॥

इतीति ॥ दुःखमस्याः संजातं दुःखिता । संजातदुःखेत्यर्थः । तारकादित्वादितच् । सा रतिरेनं वसन्तमित्युवाच च । चकारः पूर्वोक्तसमुच्चयार्थः । हे वसन्त, पश्य सुहृदस्तवत्सखस्य किं स्थितं किमुपस्थितं तदिदं कपोतकर्बुरं पारावतशबलं कणशश्चूर्णीभूतम् । अल्पार्थाच्छस्प्रत्ययः । भस्म पवनैर्विकीर्यते विक्षिप्यते । पश्य भस्मीभूतस्ते सुहृदित्यर्थः ॥

And thus did the afflicted [ Rati ] speak to this [Vasanta] " See, oh Vasanta, what has remained of [ your ] friend ! Those ashes here, variegated ( karburam ) like a pigeon are being scattered about in particles by breezes [ of wind ]."—27

अयि संप्रति देहि दर्शनं स्मर पर्युत्सुक एष माधवः ।
दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥

अयीति ॥ अयि स्मर, संप्रति दर्शनं देहि । एष माधवो वसन्तः पर्युत्सुकस्त्वद्दर्शनोत्कण्ठितः । त्वामप्यनादृतवतोऽस्य को माधव इत्याशङ्क्याह— नृणां पुरुषाणां दयितासु प्रेमानवस्थितमस्थिरम् । चलमित्यर्थः । सुहृज्जने प्रेम तु न चलं खलु ।

" Ah ! vouchsafe your sight [ at least ] now ; oh Smara, here this Mādhava is all eager ( paryutsuka ) [ to see you ].

The affection of men, not [ quite ] firm towards their beloveds, is indeed not fickle towards their [ male ] friends.—28.

ईदृशाः सुहृदः कति न सन्तीत्याशङ्क्य न कोऽपीत्याह—

अमुना ननु पार्श्ववर्तिना जगदाज्ञां ससुरासुरं तव ।
बिसतन्तुगुणस्य कारितं धनुषः पेलवपुष्पपत्रिणः ॥ २९ ॥

अमुनेति ॥ ननु मदन, पार्श्ववर्तिना सहचरेणामुना वसन्तेन ससुरासुरं सुरासुरसहितं जगद्बिसतन्तुगुणस्य मृणालसूत्रमौर्वीकस्य पेलवानि कोमलानि पुष्पाण्येव पत्रिणो बाणा यस्य तस्य तव धनुष आज्ञां कारितम् । जगदाज्ञा कारितेत्यर्थः । 'हृक्रोरन्यतरस्याम्' इति जगतः कर्मत्वम् ॥

"Indeed, by this one standing by your side, the world along with the gods and the demons, was caused to carry out ( kāritam ) the command of your bow, with tender flowers for its arrows and fibres of lotus-stalks as its string.—29.

गत एव न ते निवर्तते स सखा दीप इवानिलाहतः ।
अहमस्य दशेव पश्य मामविषह्यव्यसनेन धूमिताम् ॥ ३० ॥

गत इति ॥ स ते सखानिलाहतो वायुताडितो दीप इव गत एव न निवर्तते । अहमस्य दीपायमानस्य दशा वर्तिरिव । तिष्ठामीति शेषः । 'दशा वर्ताववस्थायां वस्त्रान्ते स्युर्दशा अपि' इति विश्वः । कुतः । अविषह्यव्यसनेन सोढुमशक्यदुःखप्रकर्षेण धूमितां संजातधूमां मां पश्य । धूमवत्त्वान्नष्टदीपदशासाम्यं धूमश्च व्यसनमेवेत्यर्थः ॥

"Definitely ( *eva* ) gone is that friend of yours. Like a lamp struck by [ a gale of ] wind, he does not return. I [ am ] like the wick of this [ lamp ]. Look at me [ made ] smoky by the unbearable calamity [ owing to my lord's departure to the yonder world ].—30.

कर्तव्यश्चायमर्थः स्त्रीणामित्याह—

शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥ ३३ ॥

शशिनेति ॥ कौमुदी चन्द्रिका शशिना सह याति । शशिन्यस्तमिते स्वयं नश्यतीत्यर्थः । तडित्सौदामिनी मेघेन सह प्रलीयते प्रणश्यति । कर्तरि लट् । प्रमदाः स्त्रियः पतिवर्त्म गच्छन्तीति पतिवर्त्मगाः पतिमार्गानुगामिन्य इत्येतद्विचेतनैः । अविवेकिभिरपीत्यर्थः । नाथस्तु 'पृथग्जनैः' इति पपाठ । प्रतिपन्नं ज्ञातम् । 'अलवणा यवागूः' 'अनुदरा कन्या' इतिवदल्पत्वाभिप्रायेण विचेतनैरपीति निर्देशः । पतिवर्त्मगा इत्यत्र स्मृतिः—'आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥' इति ॥

With the moon goes the moonlight; with the cloud is the lightening dissolved. That ladies follow the path of their husbands is really (hi), understood by even the insentient.—33.

अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना।
नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ ॥ ३४ ॥

अमुनेति ॥ अमुना पुरोवर्तिना सुभगेन शोभनेन प्रियगात्रभस्मनैव । एवकारो मण्डनान्तरनिवृत्त्यर्थः । कषायितस्तनी रञ्जितस्तनी । 'रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे' इति वैजयन्ती । नवपल्लवसंस्तरे यथा नवपल्लवतल्प इव विभावसौ वह्नौ तनुं शरीरं रचयिष्यामि निधास्यामीत्यर्थः ॥

"With breasts decorated by these fine (subhaga) ashes of the body of my dear [husband], I shall place my body on the fire, as on a bed of fresh sprouts. 34.

कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः।
कुरु संप्रति तावदाशु मे प्रणिपाताञ्जलियाचितश्चिताम् ॥ ३५ ॥

कुसुमेति ॥ हे सौम्य साधो, त्वमावयो रतिपञ्चबाणयोर्बहुशो बहुवारं कुसुमास्तरणे पुष्पशयने सहायतां गतः । संप्रति प्रणिपाताञ्जलिना याचितः ।

अञ्जलिपूर्वकं प्रार्थितः सन्नित्यर्थः । आशु मे चितां काष्ठचयं कुरु कुरुष्व । यथेह तथामुत्रोपकर्तव्यं मित्रेणेत्यर्थः ॥

"Many a time have you acted as a helper [ lit., gone to the state of one that helps ], oh gentle one, in the [ matter of the ] arrangement of a flower-bed, for us two. Do now, requested [ by me ] with hands folded as a mark of salutation, quickly arrange the [ funeral ] pyre for me.—35.

तदनु ज्वलनं मदर्पितं त्वरयेर्दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः क्षणमप्युत्सहते न मां विना ॥३६॥

तदन्विति ॥ तच्चिताकरणमन्वनन्तरं मय्यर्पितं मदर्पितं ज्वलनमग्निं दक्षिणवातवीजनैर्मलयमारुतसंचारणैस्त्वरयेः त्वरितं ज्वलयेरित्यर्थः । त्वराहेतुमाह—ते तव विदितं खलु । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः । तद्योगात्कर्तरि षष्ठी । यथा येन प्रकारेण स्मरो मां विना क्षणमपि नोत्सहते न हृष्यति । तथा त्वया ज्ञातमेवेत्यर्थः ॥

"And after that, hasten [ the burning of ] the fire placed on me by the fannings with the southern breezes. Indeed, to you it is [ well ] known that (yathā) Smara does not feel happy (na utsahate) even for a moment, without me.—36.

इति चापि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र तं मया सहितः पास्यति ते स बान्धवः ॥३७॥

इतीति ॥ अपि चेत्येवं विधाय कृत्वा नावावाभ्यामेक एव सलिलस्याञ्जलिर्दीयताम् । समप्यपि स ते बान्धवः सखा स्मरः परत्र परलोके मया सहितोऽविभज्य पास्यति ॥

"Furthermore (cha api) having done this (iti), let just a cavity-ful of water be given us. That friend of yours,

in the other world, without dividing [ into twain as his share and my share ], will drink, that [ very water ], along with me (*mayā sahitaḥ*)—37.

परलोकविधौ च माधव स्मरमुद्दिश्य विलोलपल्लवाः ।
निवपेः सहकारमञ्जरीः प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥

परलोकेति ॥ किंच हे माधव वसन्त, परलोकविधौ पिण्डोदकादिकर्मणि स्मरमुद्दिश्य विलोलाः पल्लवा यासु ताः सहकारमञ्जरीश्चूतवल्लरीर्निवपेर्देहि । हि यस्मात्कारणात्ते सखा स्मरः प्रियाश्चूतप्रसवा यस्य स तथोक्तः ॥

"And in rites with regard to the other world, you will offer (as libation, lit., or as a funeral offering), oh Mādhava, mango-blossoms with their sprouts waving (*vilolapallavāḥ*). For, your friend [ is one ] who holds dear [ all ] mango-produce."—38.

इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविक्लवां प्रथमा वृष्टिरिवान्वकम्पयत् ॥ ३९ ॥

इतीति ॥ इति देहस्य विमुक्तये शरीरस्य विसर्गाय स्थिताम् । कृतनिश्चयामिति यावत् । रतिमाकाशभवा सरस्वत्यशरीरा वाग्घ्रदशोषविक्लवां ह्रदस्य जलाधारस्य शोषेण विक्लवां शफरीं प्रोष्ठीम् । 'प्रोष्ठी तु शफरी द्वयोः' इत्यमरः । प्रथमा वृष्टिर्वर्षमिवान्वकम्पयदनुकम्पितवती सदयमुवाचेत्यर्थः । 'कृपा दयानुकम्पा स्यात्' इत्यमरः ॥

A voice (rising) from the sky, took pity on Rati, (who) thus stood [ prepared ] for the abandonment of her body, like the first shower [ of rain, after summer, taking pity on ] a female Shaphara [ a varity of fish ], distressed by the drying up of the pond [ she inhabits ].—39.

कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।
शृणु येन स कर्मणा गतः शलभत्वं हरलोचनार्चिषि ॥ ४० ॥

कुसुमेति ॥ हे कुसुमायुधपत्नि रते, तव भर्ता चिराचिरं दुर्लभो न भविष्यति । किंत्वचिरमेव सुलभो भविष्यतीत्यर्थः । किंच शृणु । तत्कर्मेति शेषः । येन कर्मणा स ते भर्ता हरलोचनस्यार्चिर्ज्वाला । 'ज्वाला भासो न पुंस्यर्चिः' इत्यमरः । तस्मिञ्शलभत्वं पतङ्गत्वं गतः । 'समौ पतङ्गशलभौ' इत्यमरः ॥

"[ Oh ] spouse of [ the ] flower-weaponed [ god ], your husband will not be difficult to be secured, for you, long. Listen to [that] act by which he was reduced to [ lit., went to ] the condition of a moth, in the flame (archis) from S'ankara's eye.—40

तदेव कर्मोपाचष्टे—

अभिलापमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः ।
अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥

अभिलापेति ॥ उदीरितेन्द्रियः प्रेरितेन्द्रियः । स्मरेणेति शेषः । प्रजापतिर्ब्रह्मा स्वसुतायां सरस्वत्यामभिलापमनुरागमकरोत् । अथ तेन प्रजापतिना विक्रियामिन्द्रियविकारं निगृह्य निरुध्याभिशप्तः सन् । एतत्फलं दाहात्मकं स्वकर्मफलमन्वभूत् ॥

"The Lord of Creatures [ i. e. Brahmā ], with his [ sexual ] sense impelled (udīrita) [ by Madana ] entertained a [ far from natural ] longing towards his own daughter. And [ subsequently ] cursed by him, on having controlled the abnormal activity (vikriyā) [of his senses],—this [ one i. e. Madana ], experienced this fruit.—41.

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन—

परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः ।
उपलब्धसुखस्तदा स्मरं वपुषा स्वेन नियोजयिष्यति ॥ ४२ ॥

इति चाह स धर्मयाचितः स्मरशापावधिदां सरस्वतीम्।
अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः ॥ ४३ ॥

परिणेष्यतीति । इतीति च ॥ धर्मेण धर्माख्यप्रजापतिना याचितः प्रार्थितः स भगवान्ब्रह्मा । तपसा कारणेन तस्यां पार्वत्यां प्रवणीकृतोऽभिमुखीकृतो हरः शिवो यदा पार्वतीं परिणेष्यत्युद्वक्ष्यति तदोपलब्धसुखः प्राप्तानन्दः सन् । स्मरं कामं स्वेन वपुषा नियोजयिष्यति संगमयिष्यति । इत्येवं स्मरशापस्यावधिदामवसानदायिनीं सरस्वतीं वाचं चाह । एवं शापावधिमप्युक्तवानित्यर्थः । ननु तथा क्रुद्धस्य कथमीदृशी शान्तिरत आह—वशिनो जितेन्द्रियाश्चाम्बुधराश्चाशनेरमृतस्य चेत्युभयोर्योनयः प्रभवाः । वशिपक्षेऽशन्यमृतशब्दौ कोपप्रसादपरौ । अन्यत्र वैद्युताम्बुदकपरौ । युग्मकम् ॥

"When Hara will marry Pārvati, [ being ] made to incline favourably towards her by the austerities [ she will practise ], ( then, *tadā* ) [ after ] having secured happiness [ arising out of love or generally speaking ], [ he ] i. e. S'ankara ], will cause him to be endowed with [ lit. united with ] his body [ again ]. And thus ( *iti cha* ) he uttered the speech, giving the limit ( *avadhi* ) of the curse on Madana, being begged of [ to do so ] by Dharma [ a Creator ]. Of both *as'ani* [ anger and thunderbolt and *amrita* [ favour and water ], the self-controlled ones ( *vas'inah* ) and the clouds [ lit., holders of water ] are sources.—42 & 43.

तदिदं परिरक्ष शोभने भवितव्यप्रियसंगमं वपुः।
रविपीतजला तपात्यये पुनरोघेन हि युज्यते नदी ॥ ४४ ॥

तदिति ॥ हे शोभने, तत्तस्मात्कारणाद्भवितव्यो भविष्यत्प्रियसंगमो यस्य तत्तथोक्तमिदं वपुः परिरक्ष । तथाहि । रविपीतजला नदी तपात्यये प्रावृषि । 'प्रावृट् तपात्यये' इति हलायुधः । पुनरोघेन प्रवाहेण युज्यते संगच्छते हि ॥

"Preserve well, therefore ( *tat* ), oh good lady, this body of yours, with its union with the dear [ one ] destined

( bhavitavya ) [ i. e. sure ] to take place. For, a river with the water evaporated [ lit., drunk in ] by the sun, is united again with the stream ( or current ), at the end of Summer [ lit. heat ].—44"

इत्थं रतेः किमपि भूतमदृश्यरूपं
मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेना-
माश्वासयत्सुचरितार्थपदैर्वचोभिः ॥ ४५ ॥

इत्थमिति ॥ इत्थमनेन प्रकारेणादृश्यरूपं किमपि भूतं कश्चित्प्राणी । 'युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु' इत्यमरः । रतेर्मदनदाराणां मरणव्यवसायबुद्धिं मरणोद्योगबुद्धिं मन्दीचकार । निवारयामासेत्यर्थः । 'मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः । अथ कुसुमायुधबन्धुर्वसन्तश्च तत्प्रत्ययात्तस्मिन्भूते विश्वासात् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु' इत्यमरः । एनां रतिं सुष्ठु चरितार्थानि पदानि येषां तैर्वचोभिर्वाक्यैराश्वासयत् । सर्वथा ते देवताप्रसादात्प्रियसंगमो भविष्यतीत्यादिवचनैरस्या दुःखमपाचकारेत्यर्थः ॥

Some indescribable being, of an invisible form, thus slackened [ lit. made dull ] the thought ( buddhi ) of the act ( vyavasāya ) of death [ inflicted on oneself ] of Rati. And owing to his confidence in that [ being ], the friend of the flower-weaponed [ god ] comforted this [ one, i. e. Rati ] by utterances ( vachobhih ) the words in which had their meaning well carried out.—45

अथ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयांबभूव ।
शशिन इव दिवातनस्य लेखा किरणपरिक्षयधूसरा प्रदोषम् ॥४६॥

अथेति ॥ अथानन्तरं व्यसनेन दुःखेन कृशा मदनवधू रतिरुपप्लवान्तं विपदवधि किरणपरिक्षयेण धूसरा मलिना दिवातनस्य दिनभवस्य । 'सायंचिरम्' इत्यादिना ट्युप्रत्ययः । शशिनश्चन्द्रस्य लेखा प्रदोषं रात्रिमिव परिपालयांबभूव

प्रतीक्षांचक्रे । पुष्पिताग्रावृत्तम्—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥

The wife of Madana, emaciated with grief, awaited the end of her calamity ( upaplava ) like the digit of the moon by day, dusty on account of an all round reduction ( परिक्षय ) of rays, [ awaiting the arrival of ] the fore—part of the night.—46.

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीविनी-
समाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे
महाकाव्ये रतिविलापो नाम चतुर्थः सर्गः ।

---

# पञ्चमः सर्गः ।

**तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।**
**निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥१॥**

तथेति ॥ पर्वतस्यापत्यं स्त्री पार्वती तथा तेन प्रकारेणाक्ष्णोः समीपे समक्षं पुरतः । 'अव्ययं विभक्तिसमीपसमृद्धि-' इत्यादिनाव्ययीभावः । मनोभवं मन्मथं दहता भस्मीकुर्वता पिनाकिनेश्वरेण भग्नः खण्डितो मनोरथोऽभिलाषो यस्याः सा तथोक्ता सती हृदयेन मनसा रूपं सौन्दर्यं निनिन्द । धिग्वे रूपं यद्धरमनोहरणाय नालमिति गर्हितवतीत्यर्थः । युक्तं चैतदित्याह—तथाहि । चारुता सौन्दर्यं प्रियेषु पतिषु विषये सौभाग्यं प्रियवाल्लभ्यं फलं यस्याः सा तथोक्ता । सौन्दर्यस्य तदेव फलं यद्भर्तृसौभाग्यं लभ्यते । नो चेन्निष्फलं तदिति भावः । अस्मिन्सर्गे वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥

Pārvati being (sati) [ one ] with her cherished desires frustrated by the possessor of the Pināka [i. e. god S'ankara], thus burning the mind-born [ Kāma ] before [ her very ] eyes, found fault with [ lit., blamed, censured ] her beauty (*rūpa*) in her mind; for charm [ lit., the state of being charming, *chārutā* ] has good luck [ or success ] with the beloved as its fruit.—1.

**इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।**
**अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥२॥**

इयेषेति ॥ सा पार्वती समाधिमेकाग्रतामास्थायावलम्ब्य तपोभिर्वक्ष्यमाणनियमैः करणभूतैरात्मनः स्वस्यावन्ध्यरूपतां सफलसौन्दर्यं कर्तुमियेषेच्छति स्म । तपसा शिवं वशीकर्तुमुद्युक्तेत्यर्थः । अन्यथा ततोऽन्यप्रकारेण कथं वा तद्द्वयमवाप्यते । किं तद्द्वयम् । तथाभूता विधा प्रकारो यस्य तत्तथाविधं प्रेम स्नेहः येनार्धाङ्गहरा हरस्य भवेदिति भावः । तादृशः पतिश्च । यो मृत्युंजय इति

भावः । द्वयमेव खलु स्त्रीणामपेक्षितं यद्भर्तृवाल्लभ्यं जीवद्भर्तृकत्वं चेति । तच्च तपश्चर्यैकसाध्यमिति निश्चिकायेत्यर्थः । अत्र मनुः—'यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरम् । तत्सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम् ॥' इति ॥

She desired to accomplish (kartum) [in] her own [case], the state of having beauty [that was] not [altogether] fruitless, by austerities, after having resorted to (āsthāya) the concentration [of her mental powers, samādhi]; or how is the pair secured otherwise [viz.,—] love of that [noble] kind, and a husband of that distinction [lit., of that type] ?—2.

निशम्य चैनां तपसे कृतोद्यमां सुतां गिरीशप्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ॥३॥

निशम्येति ॥ मेना मेनका च गिरीशप्रतिसक्तमानसां हरासक्तचित्तां तपसे तपश्चरणाय कृतोद्यमां कृतोद्योगां सुतां निशम्य श्रुत्वैनां पार्वतीं वक्षसा परिरभ्याऽऽलिङ्ग्य महतो मुनिव्रतात्तस्मो निवारयन्त्युवाच । मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् 'वारणार्थानामीप्सितः' इति नापादानत्वं तथापि कृतोद्यमामिति मानसप्रवेशोक्तत्वात् 'ध्रुवमपायेऽपादानम्' इत्यपादानत्वमेव स्यात् । यथाह भाष्यकारः—'यत्र मिथ्या संप्राप्य निवर्तते तत्र ध्रुवमपायेऽपादानमिति प्रसिद्धम्' इति ॥

Having learnt about [lit., heard] her daughter, who had her mind firmly attached to [the lord of mountain i.e.] S'ankara, [and] who had started her efforts for [practising] penance, Menā [Pārvati's mother] embracing her close to [lit., by] her bosom, [with the purpose of] dissuading her from the rigorous (mahatah) vow of an ascetic, said—3.

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह—

मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥ ४ ॥

मनीपिता इति ॥ हे वत्से, मनस ईप्सिता इष्टा मनीपिताः । शकन्ध्वादित्वात्साधुः । देवताः शच्यादयो गृहेषु सन्ति । त्वं ता आराधयेति शेषः । तपः क तवेदं तावकम् । 'युष्मदस्मदोरन्यतरस्यां खञ्च' इत्यण्प्रत्ययः । 'तवकममकावेकवचने' इति तवकादेशः । वपुश्च क । तथाहि । पेलवं मृदुलं शिरीषपुष्पं भ्रमरस्य भृङ्गस्य पदं पदस्थितिं सहेत । पतत्रिणः पुनः पक्षिणस्तु पदं न सहेत । अतिसौकुमार्याद्दिव्योपभोगयोग्यं ते वपुर्न दारुणतपःक्षममित्यर्थः । अत्र दृष्टान्तालंकारः ॥.

"In the house, [ there ] are (santi) deities desired by the mind [ Or with 'मनीपितायार्च' as the reading, Worship the deities at home for ( the obtainment of ) the mind's desire ]. Dear child, where [ is ] penance and where this [ frail ] body of yours? The delicate, शिरीष flower, may bear the foot of a bee, but not certainly [ lit., again punah ] that of a winged being [ i. e. a bird ]."—4

इति ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात्।
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥५॥

इतीति ॥ इत्येवमनुशासत्युपदिशन्ती मेना ध्रुवेच्छां स्थिरव्यवसायां सुतां पार्वतीमुद्यमादुद्योगात्तपोलक्षणान्नियन्तुं निवारयितुं न शशाक समर्था नाभूत् । तथाहि । ईप्सितार्थे इष्टार्थे स्थिरनिश्चयं मनो निम्नाभिमुखं पयश्च कः प्रतीपयेत्प्रतिकूलयेत् । प्रतिनिवर्तयेदित्यर्थः । निम्नप्रवणं पय इवेष्टार्थाभिनिविष्टं मनो दुर्वारमिति भावः । अत्र दीपकानुप्राणितोऽर्थान्तरन्यासालंकारः ॥.

Menakā, thus instructing her daughter of a firm desire, was not able to keep [ lit., restrain, control ] her from her undertaking [ or resolve ]. Who would cause to run in the opposite direction ( pratipayet ), the mind with its resolve firm in regard to the object that is desired, and water flowing in the direction of a lower level?—5

**कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी।**
**अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥६॥**

कदाचिदिति ॥ अथ कदाचिन्मनस्विनी स्थिरचित्ता सा पार्वती मनोरथज्ञमभिलाषाभिज्ञं पितरं हिमवन्तमासन्नसख्यासन्नसखी सैव मुखमुपायः। 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि' इति विश्वः। तेन फलोदयः फलोत्पत्तिरन्तोऽवधिर्यस्य तस्मै तपःसमाधये तपोनियमार्थमात्मनः स्वस्यारण्यनिवासं वनवासमयाचत। 'दुह्याच्–' इत्यादिना द्विकर्मकत्वम् ॥

Once, that spirited (*manasvini*) [Pārvati], begged of her father who was aware of [her] heart's desire, [permission for] her (*ātmanah*) residence in the forest, for concentration [of mental powers] for penance with the winning (*udaya*, lit., rise) of the fruit as its end, through the medium [lit. the mouth] of her female friend [who stood] close by.—6.

**अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा।**
**प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरी शिखरं शिखण्डिमत्॥७**

अथेति ॥ अथ गौर्यनुरूपेण योग्येनाभिनिवेशेनाग्रहेण तुष्यतीति तथोक्तेन गरीयसा पूज्यतमेन गुरुणा पित्रा कृताभ्यनुज्ञा तपः कुर्विति कृतानुमतिः सती पश्चात्तपःसिद्ध्युत्तरकाले प्रजासु जनेषु तदाख्यया तस्या गौर्याः संज्ञया प्रथितम्। गौरीशिखरमिति प्रसिद्धमित्यर्थः। शिखण्डिमत्। न तु हिंस्रप्राणिप्रचुरमिति भावः। शिखरं शृङ्गं जगाम ययौ ॥

Then, with the permission granted by the noble (*gariyas*) father, having gratification at [her] firm attachment to a worthy [*anurūpa* person, as her husband], Gauri went to the peak, teeming with peacocks, celebrated later among men (*prajāsu*) after her name (*ākhyā*) [as Gauris'ikhara, Gauri's Peak].—7.

विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम् ।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥ ८ ॥

विमुच्येति ॥ अहार्यनिश्चयानिवार्यनिश्चया सा गौरी विलोलाभिश्चलाभिर्यष्टिभिः प्रतिसरैः प्रमुष्टं चन्दनं स्तनान्तरगतं येन तं तथोक्तं हारं मुक्तावली विमुच्य विहाय बालारुणबभ्रु बालार्कपिङ्गलं पयोधरयोः स्तनयोरुत्सेधेनोच्छ्रायेण विशीर्णा विघटिता संहतिरवयवसंश्लेषो यस्य तत्तथोक्तं वल्कलं कण्ठलम्बि स्तनोत्तरीयभूतं बबन्ध । धारयामासेत्यर्थः ॥

She, with a resolve not to be shaken, having taken off (*vimuchya*) [her] necklace, that caused the sandal paste [applied to her breasts] to be rubbed away by its unsteady (*vilola*) strings, tied a bark (garment), tawny (*babhru*) like the young sun, with its contact [with the] body (*samhati*) loosened (विशीर्ण lit., shattered) by the protuberance of [her] breasts.—8.

यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।
न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥ ९ ॥

यथेति ॥ तस्या देव्या आननं तदाननं प्रसिद्धैर्भूषितैः । 'प्रसिद्धौ ख्यातभूषितौ' इत्यमरः । रोहन्तीति रुहाः । 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः । शिरसि रुहास्तैः शिरोरुहैर्मूर्धजैर्यथा मधुरं प्रियमभूत् । 'स्वादुप्रियौ तु मधुरौ' इत्यमरः । जटाभिरप्येवं मधुरमभूत् । तथाहि पङ्कजं पद्मं षट्पदश्रेणिभिर्भ्रमरपङ्क्तिभिरेव न किंतु सह शैवलासङ्गेन सशैवलासङ्गमपि । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । प्रकाशते । शैवलेनापि शोभत एवेत्यर्थः ॥

The face of that [Pārvati] was as much (*evam*) sweet with the matted hair, as (*yathā*) with the hair well decorated (*prasiddha*). A lotus appears beautiful [lit. shines brightly] not only with the rows of bees, but even [when it is] associated with moss clinging [to it].—9.

प्रतिक्षणं सा कृतरोमविक्रियां व्रताय मौञ्जीं त्रिगुणां बभार याम्।
अकारि तत्पूर्वनिबद्धया तया सरागमस्या रशनागुणास्पदम् ॥१०॥

प्रतीति ॥ सा देवी प्रतिक्षणं क्षणे क्षणे कृतरोमविक्रियां पारुष्यात्कृतरोमाञ्चां त्रिगुणां त्रिरावृत्तां यां मौञ्जीं मुञ्जमयीं मेखलां व्रताय तपसे बभार। तदेव पूर्वं प्रथमं यस्य तत्पूर्वं यथा तथा निबद्धया तया मौञ्ज्यास्या देव्या रशनागुणस्यास्पदं स्थानं जघनम्। सह रागेण सरागं सलोहितमकारि कृतम्। सौकुमार्यातिशयादिति भावः ॥

The string of munja grass with three threads [ in it ], which she wore for [ carrying out ] the vow, [ and ] which made a change [ in the normal state ] of her hair [ i. e. caused her to experience horripilation ] every moment,—by that [ string ] worn [ lit., bound ] for that (tat) the [ very ] first time (pūrva), the seat of the strings of [ her ] girdle, was made red [ lit., associated with redness ].—10.

विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागारुणिताच्च कन्दुकात्।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥११॥

विसृष्टेति ॥ तया देव्या विसृष्टरागात्त्यक्तलाक्षारसरञ्जनादधरादधरोष्ठान्निवर्तितः। 'निसृष्टरागात्' इति पाठे नितरां त्यक्तलाक्षारागात्। रागत्यागेन निष्प्रयोजनत्वादिति भावः। तथा स्तनाङ्गरागेणारुणितादरुणीकृतात्। पतनसमये तस्य स्तनयोरुपरोधादिति भावः। कन्दुकाच्च निवर्तितः। कुशाङ्कुराणामादानेन लवनेन परिक्षता व्रणिता अङ्गुलयो यस्य स तथोक्तः करः पाणिरक्षसूत्रप्रणय्यक्षमालासहचरः कृतः ॥

By her, her hand turned away from the lower lip, which had given up [ its ] redness [ the result of painting with the lac dye ], [ and ] from the ball [ rendered ] reddish (अरुण) on account of the unguent of the breasts [ with which it came into contact ], with its fingers

severely ( pari ) pricked because of the plucking of Kus'a grass, was made a lover of rosary beads [ i. e. was kept busy counting the beads of the rosary ].—11.

महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ॥१२॥

महार्हेति ॥ महानर्हो मूल्यं यस्याः सा महार्हा श्रेष्ठा या शय्या तस्यां परिवर्तनेन लुण्ठनेन च्युतैर्भ्रष्टैः स्वकेशपुष्पैरपि या देवी दूयते स्म क्लिश्यति स्म । पुष्पाधिकसौकुमार्यादिति भावः । सा देवी बाहुलतामुपधत्त उपधानीकरोतीति बाहुलतोपधायिनी सती केवले संस्तरणरहिते स्थण्डिले भूमावेवाशेत शयितवती । तथा निषेदुष्युपविष्टा च । 'क्वसुश्च' इति क्वसुः । 'उगितश्च' इति ङीप् । भूमावेव शयनादिव्यवहारो न जातु परीत्यर्थः ॥

She who used to be pained even by the flowers from her ( own sva ) hair, dropped by [ reason of ] rollings on the costly bed, [ now ] sat [ literally, sitting ] [ and ] slept on just [ eva ] bare ( kevale ) ground ( sthandila ) with the creeper-like arm as [ her ] pillow.—12.

पुनर्ग्रहीतुं नियमस्थया तया द्वयेऽपि निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं हरिणाङ्गनासु च ॥ १३ ॥

पुनरिति ॥ नियमस्थया व्रतस्थया तया देव्या द्वयेऽपि द्वयं पुनर्ग्रहीतुं पुनरानेतुं निक्षेपोऽर्पितमिव निक्षेपत्वेनार्पितं किमु । क्वचित् 'द्वयीषु' इति प्रामादिकः पाठः । कुत्र द्वये किं द्वयमर्पितमित्याह—तन्वीषु लतासु विलास एव चेष्टितं विलासचेष्टितं हरिणाङ्गनासु विलोलदृष्टं चपलावलोकितं च व्रतस्थायां तस्यां तयोरदर्शनान्नादिषु दर्शनाभावादर्पितमिवेत्युत्प्रेक्षा न तु वस्तुतोऽर्पणमस्तीति भावः ॥

By her abiding by ( stha ) the vow ( niyamā ), was entrusted [ lit., given ] the pair [ of things ] to the pair [ of beings ], as a deposit ( निक्षेप ) [ with the intention ]

to take back ( 1 ) movements full of grace ( विलासचेष्टितम् ) to the creepers and ( 2 ) tremulous glances ( विलोलदृष्टम् ) to the female deer. 13.

अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत्।
गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥

अतन्द्रितेति ॥ सा देवी स्वयमेवातन्द्रितासंजाततन्द्रा सती। तारकादित्वादितच्प्रत्ययः। वृक्षकान्स्वल्पवृक्षान्। 'अल्पे' इत्यल्पार्थे कप्रत्ययः। घटावेव स्तनौ तयोः प्रस्रवणैः प्रस्रुतपयोभिर्व्यवर्धयत्। गुहः कुमारोऽपि प्रथमाप्तजन्मनां प्रथमलब्धजन्मनाम्। अग्रजातानामित्यर्थः। येषां वृक्षकाणां संबन्धि पुत्रवात्सल्यं सुतप्रेम नापाकरिष्यति। उत्तरत्र कुमारोदयेऽपि न तेषु पुत्रवात्सल्यं निवर्तिष्यत इत्यर्थः ॥

She, [ ever ] vigilant [ lit., not slack, atandritā ], herself reared by pourings [ of milk in the form of water ] from breasts in the form of pitchers, the young trees, [ her ] affection as for her sons ( putravātsalyam ) for whom the first born [ ones ], even Guha [ Skanda or Kārtikeya ] would not [ be able to ] set aside.—14.

अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः।
यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीत लोचने ॥ १५ ॥

अरण्येति ॥ अरण्यबीजानां नीवारादीनामञ्जलयस्तेषां दानेन लालिता हरिणाश्च तस्यां देव्यां तथा विशश्वसुर्विस्रम्भं जग्मुः। 'समौ विस्रम्भविश्वासौ' इत्यमरः। यथा कुतूहलादौत्सुक्यात्तदीयैर्हरिणसंबन्धिभिर्नयनैर्नेत्रैः करणैः स्वकीये लोचने सखीनां पुरः पुरतः। अनेन तेषां संबन्धसादृश्यमुक्तम्। अमिमीत। अक्षिपरिमाणतारतम्यज्ञानाय मानं चकारेत्यर्थः। केचित्तु सा पार्वती तदीयैर्नेत्रैः कुतूहलात्पुरोऽग्रे वर्तमानानां सखीनां लोचने अमिमीत मतस्थस्यात्मन इत्याहुः। 'माङ् माने' इत्यस्माद्धातोर्लङ्। इयमेव खलु विश्वासस्य परा काष्ठा यदक्षिपीडनेऽपि न क्षुभ्यन्तीति भावः ॥

And the deer fondled by the giving of cavity-fuls (anjali) of forest [ grown ] seeds, trusted her to such an extent (tathā) that (yathā) she measured the eyes of her female friends [ standing ] in front (puraḥ), with those of theirs [ i. e. deer's, ] out of curiousity [*alternatively*, *she measured her ( own ) eyes with those of the deer*, in the presence of her female friends, out of curiousity ].—15

तपःप्रभावमाह—

कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते ॥ १६ ॥

कृतेति ॥ कृताभिषेकां कृतस्नानां हुतजातवेदसं हुताग्निकाम् । कृतहोमामित्यर्थः । त्वचा वल्कलेनोत्तरासङ्गवतीमुत्तरीयवतीं त्वगुत्तरासङ्गवतीम् । अधीतमस्या अस्तीत्यधीतिनी स्तुतिपाठादिकुर्वतीम् । 'इष्टादिभ्यश्च' इतीनिप्रत्ययः । तां देवीं दिदृक्षवो द्रष्टुमिच्छव ऋषयो मुनयोऽभ्युपागमन्नभ्युपागताः । न चात्र कनिष्ठसेवादोष इत्याह—धर्मवृद्धेषु वयो न समीक्ष्यते न प्रमाणीक्रियते । सति धर्मज्यैष्ठ्ये वयोज्यैष्ठ्यं न प्रयोजकमित्यर्थः । तथा च मनुः—'न तेन वृद्धो भवति येनास्य पलितं शिरः । यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥' इति ॥

Sages approached [ her ], being desirous of seeing her (tām) who used to have taken her bath (अभिषेक) [ likewise ] to have offered [ oblations ] *to fire* (jātavedas), possessed of the bark *as her upper garment* [ and who used to be ] *reciting the sacred texts* (adhītinīm). In regard to those that are senior (vriddha, lit., old) in [ performance of ] sacred duty [ dharma ], age is not taken into account [ at all ].—16

विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवार्चितातिथि ।
नवोटजाभ्यन्तरसंभृतानलं तपोवनं तच्च बभूव पावनम् ॥ १७ ॥

विरोधीति ॥ विरोधिभिः सत्त्वैर्गोव्याघ्रादिभिरुज्झितपूर्वमत्सरं त्यक्तपूर्ववैरम् । हिंसारहितमित्यर्थः । द्रुमैरभीष्टप्रसवैरिष्टफलैरर्चिताः पूजिता अतिथयो

यस्मिंस्तत्तथोक्तम् । नवानामुटजानां पर्णशालानामभ्यन्तरेषु संभृताः संचिता अनला अग्नयो यस्मिंस्तत्तथोक्तं तच्च तपोवनम् । पावयतीति पावनं बभूव । अहिंसातिथिसत्कारामियरिचर्याभिर्जगत्पावनं बभूवेत्यर्थः ॥

That penance grove, where the previous jealousy was given up by animals (*sattva*) antagonistic [to each other], where guests were honoured with the desired produce (*prāsava*) [ such as flowers etc. ] by the trees, where fire was well preserved [ lit., collected ] inside a new [—ly erected ] cottage became [ endowed ] the with *purifying* [ quality ].—17

यदा फलं पूर्वतपःसमाधिना न तावता लभ्यममंस्त काङ्क्षितम् ।
तदानपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥ १८ ॥

यदेति ॥ सा देवी यदा यस्मिन्काले तावता तावत्प्रमाणेन पूर्वतपःसमाधिना पूर्वेणानुष्ठीयमानप्रकारेण तपोनियमेन काङ्क्षितं फलं लभ्यं लब्धुं शक्यं नामंस्त । अशक्यममंस्तेत्यर्थः । तदा तत्काले । अविलम्बेनेत्यर्थः । स्वशरीरस्य मार्दवं मृदुत्वं सौकुमार्यमनपेक्ष्याविगणय्य महद्दुश्चरं तपश्चरितुं साधयितुं प्रचक्रम उपचक्रमे ॥

When she considered the desired fruit [ as ] not obtainable with that much [ *tāvatā* ] previous concentration [of mental powers] for [ the practising of ] penance, (then, *tadā* ) disregarding the delicacy ( *mārdavam* ) of her (own) body, she started practising great [er] austerities [still.]—18

क्लमं ययौ कन्दुकलीलयापि या तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदु प्रकृत्या च ससारमेव च ॥ १९ ॥

क्लमेति ॥ या देवी कन्दुकलीलया कन्दुकक्रीडयापि क्लमं ययौ ग्लानिं प्राप तया देव्या मुनीनां चरितं तीव्रं तपो व्यगाह्यत प्रविष्टम् । अत्रोत्प्रेक्षते— ध्रुवमस्या वपुः काञ्चनपद्मेन सुवर्णकमलेन निर्मितं घटितम् । अतएव प्रकृत्या

पद्मस्वभावेन मृदु च सुकुमारमपि काञ्चनस्वभावेन ससारं च कठिनमेव । तथा च तदुपादानकत्वाद्देव्या वपुषः सुकुमारस्यापि तीव्रतपःक्षमत्वमित्युत्प्रेक्षार्थः ॥

The activity (charitam) of sages [viz., practising penance] was carried out [lit., fathomed or plunged into, vyagāhyata] by her, who [ prior to this ] used to be fatigued even on account of the sport with the ball; surely [ her ] body, fashioned out of a gold lotus [ was ] by nature [ prakriti ] at once delicate and full of strength [ i. e. tough ].—19.

शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा।
विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥ २० ॥

शुचाविति ॥ शुचौ ग्रीष्मे शुचिस्मिता विशदमन्दहासा सुमध्यमा पार्वती ज्वलतां दीप्तिमतां चतुर्णां हविर्भुजामग्नीनां मध्यगता सती । नेत्रे प्रतिहन्तीति तां नेत्रप्रतिघातिनीं प्रभां गाविनं तेजो विजित्य न विद्यतेऽन्यत्र दृष्टिर्यस्याः सानन्यदृष्टिः सती सवितारं सूर्यमैक्षत ददर्श । 'ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः' इति स्मरणात् । पञ्चाग्निमध्ये तपश्चचारेत्यर्थः । तत्र सवितैव पञ्चमोऽग्निः—'अग्निः सविता सवितैवाग्निः' इति श्रुतिलिङ्गात् ॥

During summer (s'uchau) [she] with a charming [lit., pure] smile and a slender waist, standing [lit., gone] in the midst of four burning fires, having conquered the [sun's] lustre dazzling [lit., striking against] the eyes, with [her] gaze (दृष्टि) [riveted] on naught else, looked [on] at the sun.—20.

तथातितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ।
अपाङ्गयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पदम् ॥ २१ ॥

तथेति ॥ सवितुः सूर्यस्य गभस्तिभिः किरणैस्तथा पूर्वोक्तप्रकारेणातितप्तं संतप्तं तस्या इदं तदीयं मुखं कमलश्रियं कमलस्य शोभां दधौ प्राप । यथा रवितापात्कमलं न म्लायति प्रत्युत विकसति तथा तदीयं मुखमासीदिति भावः ।

कितस्य मुखस्य दीर्घयोरपाङ्गयोः केवलं नेत्रान्तयोरेव शनैःशनैर्मन्दंमन्दं श्यामिकया कालिम्ना पदं स्थानं कृतम् । तयोः सौकुमार्यादित्यर्थः ॥

The face of that [ Pārvatī ], heated excessively in that manner, by the rays of the sun, had the beauty ( s'riyam ) of a lotus. In the long corners of the eyes of this [ face ] alone ( kevalam ), a footing was made, by degrees ( s'anaih s'anaih ), by the darkness [ of skin or complexion. ].—21.

**अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः ।**
**बभूव तस्याः किल पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्तसाधनः॥२२॥**

अयाचितेति ॥ अयाचितोपस्थितमप्रार्थितोपनतं केवलमम्बूदकं रसात्मकस्यामृतमयस्योडूनां नक्षत्राणां पतिश्चन्द्रस्तस्य रश्मयश्च तस्याः पार्वत्याः पारणाविधिरभ्यवहारकर्म बभूव । तावन्मात्रसाधनकोऽभूदित्यर्थः । साध्यसाधनयोरभेदेन व्यपदेशः साधनान्तरव्यावृत्त्यर्थः । किलेति प्रसिद्धौ । वृक्षाणां या वृत्तिर्जीवनोपायस्तद्व्यतिरिक्तं साधनमुपायो यस्य स तथोक्तः पारणाविधिर्न बभूव । वृक्षोऽप्ययाचितोपस्थितेन मेघोदकेनेन्दुकिरणैश्च जीवतीति प्रसिद्धम् । अम्बिकापि तावन्मात्रमवालम्बतेत्यर्थः ॥

Mere water that became available [ lit., came near ] without being asked for and the rays of the lord of constellations [ i. e. the moon ] with nectar as his essence—[ these two ] indeed, became the means ( vidhi ) of the termination [ of the fast, she was observing ], having no means [ of subsistence ] other than [ those of ] the trees.—22

**निकामतप्ता विविधेन वह्निना नभश्चरेणेन्धनसंभृतेन सा ।**
**तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥२३॥**

निकामेति ॥ विविधेन पञ्चविधेनेत्यर्थः । नभश्चरेण खेचरेण । आदित्यरूपेणेत्यर्थः । इन्धनसंभृतेन काष्ठसमिद्धेन वह्निना निकाममत्यन्तं तप्ता तापसिका तपात्यये ग्रीष्मान्ते । प्रावृषीत्यर्थः । नवैर्वारिभिरुक्षिता सिक्ता सती भुवा

पञ्चाग्नितप्तया सहोर्ध्वगमूर्ध्वप्रसृतमूष्माणं बाष्पमसुचत् । 'ग्रीष्मोष्मबाष्पमूष्माणम्' इति यादवः ॥

Extremely heated by the manifold fire—by that which moved in the sky and [ the others ] built up with fuel, she, sprinkled by fresh waters at the passing away of Summer, gave forth, [ even ] along with the earth, vapour, going upwards.—23.

स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः॥२४॥

स्थिता इति ॥ उदकस्य बिन्दव उदबिन्दवः । 'मन्थौदन–' इत्यादिनोदकशब्दस्योदादेशः । प्रथम उदबिन्दवः । प्रथमाविशेषणाद्बिन्दूनां विरलत्वं बहुवचनान्नातिविरलत्वं च गम्यते । तथा च चिरत्वनाभ्यन्तरगमनयोर्निर्वाहः । तस्याः पार्वत्याः पक्ष्मसु नेत्रलोमसु क्षणं स्थिताः स्थितिं गताः । स्थिता इत्यनेन पक्ष्मणां सान्द्रत्वं क्षणमिति धैर्यं च गम्यते । अनन्तरं ताडितो व्यथितोऽधर ओष्ठो यैस्ते तथोक्ताः । एतेनाधरस्य मार्दवं गम्यते । ततः पयोधरयोः स्तनयोरुत्सेध उपरिभागे निपातेन पतनेन चूर्णिता जर्जरिताः । कुचकाठिन्यादिति भावः । तदनु वलीषूदररेखासु स्खलिताः । निम्नोन्नतत्वादिति भावः । इत्थं चिरेण न तु शीघ्रम् । प्रतिबन्धबाहुल्यादिति भावः । नाभिं प्रपेदिरे प्रविष्टा न तु निर्जग्मुः । एतेन नाभेर्गाम्भीर्यं गम्यते । अत्र प्रतिपदमर्थवत्त्वात्परिकरालंकारः ॥

Drops of the first [ shower of rain—] water, which stood for a while on [ her ] eye-lashes, had struck the lower lip, got themselves shattered into particles by [ their ] fall on the protuberance of [ her ] breasts [ and ] stumbled through the [ three ] folds [ on her belly ], reached, after long, her navel.—24.

शिलाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।
व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातपःसाक्ष्य इव स्थिताः क्षपाः॥२५॥

शिलाशयामिति ॥ निरन्तरासु नीरन्ध्रास्वन्तरे मध्ये वातो यासां तादृश्यो या वृष्टयस्तास्वन्तरवातवृष्टिषु । न निकेते गृहे वसतीत्यनिकेतवासिनीम् । अनावृतदेशवासिनीमित्यर्थः । शिलायां शेत इति शिलाशयां शिलातलशायिनीम् । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । तां पार्वतीं साक्षाद्द्रष्टा साक्षी । 'साक्षाद्द्रष्टरि संज्ञायाम्' इतीनिप्रत्ययः तस्य कर्म साक्ष्यं महातपसः साक्ष्ये स्थिताः क्षपास्तडिन्मयैर्विद्युद्रूपैरुन्मिषितैरवलोकनैर्व्यलोकयन्निव । इवेति चक्षुषा विलोकनमेवोत्प्रेक्ष्यते । साक्ष्यं तु 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥' इति प्रमाणसिद्धत्वान्नोत्प्रेक्ष्यमित्यनुसंधेयम् ॥

Nights standing witnesses as it were to her great penance, saw her, lying on a [ slab of ] stone, not staying in a house, [ all ] through the ceaseless showers interspersed by winds, by the openings of their eyes (उन्मिषितैः) in the shape of [ lit., full of ] lightning [ flashes ].—25.

एवं वर्षासु विहितं तपःप्रकारमुक्त्वा संप्रति हेमन्ते तपश्चरणप्रकारमाह—

निनाय सात्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती ॥ २६ ॥

निनायेति ॥ सा पार्वती । उत्किरन्ति क्षिपन्तीत्युत्किराः । 'इगुपधज्ञा–' इत्यादिना कः । अत्यन्तं हिमानामुत्किरा अनिला यासु ता सहस्यरात्रीः पौषरात्रीः । 'पौषे तैषसहस्यौ द्वौ' इत्यमरः । उदके वास उदवासः । 'पेषंवासवाहनधिषु च' इत्युदादेशः । उदवासे तत्परा आसक्ता तथा परस्परमाक्रन्दिन्यन्योन्यमाक्रोशिनि पुरोऽग्रे वियुक्ते विरहिणि । वियोगं प्राप्त इति यावत् । चक्रवाकी च चक्रवाकश्च चक्रवाकौ तयोश्चक्रवाकयोर्मिथुने द्वन्द्वे कृपावती सती निनाय । दुःखिषु कृपालुत्वं महतां स्वभाव इति चक्रवाकमिथुने कृपा न तु कामितयेति वाच्यानवकाशः । 'अप्सु वासस्तु हेमन्ते क्रमशो वर्धयेत्तपः' इति मनुः ॥

She, bent on staying in water, passed the nights of the month of पौष, with the winds excessively scattering snow [ being ] full of compassion for the pair of the chakravākas,

separated [ from each other ] in front [ of her ], piteously ( ā ) crying out for each other.—26.

मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसंपदां सरोजसंधानमिवाकरोदपाम् ॥ २७ ॥

मुखेनेति ॥ सा पार्वती निशि रात्रौ पद्मस्येव सुगन्धिना सुरभिणा । 'गन्धस्येत्–' इत्यादिनेकारः । प्रवेपमानः कम्पमानोऽधर ओष्ठ एव पत्रं दलं तेन शोभते तथोक्तेन मुखेन तुषारवृष्ट्या तुहिनवर्षेण क्षता नाशिताः पद्मसंपदो यासां तासामपां सरोजसंधानं पद्मसंघटनमकरोदिव ।इत्युत्प्रेक्षालंकारः । पद्मान्तरं तुहिनेनोपहन्यते तन्मुखपद्मं तु न तथेति व्यतिरेकालंकारो व्यज्यत इत्युभयोः संकरः ॥

She with her face fragrant like a lotus, [ appearing ] charming on account of the excessively ( pra ) throbbing leaf in the form of [ her ] lower lip, effected, at [ the hour of ] night, the restoration ( sandhānam lit. putting together or putting well ) as it were, of lotuses [ in the case ] of waters, with the wealth of their lotuses destroyed ( क्षत ), by the shower of snow.—27.

स्वयंविशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति च तां पुराविदः ॥२८॥

स्वयमिति ॥ स्वयं विशीर्णानि स्वतश्च्युतानि द्रुमपर्णान्येव वृत्तिर्जीवनं यस्य तस्य भावस्तत्ता तपसः परा काष्ठा परमुत्कर्षो हि । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः । तया देव्या पुनस्तत्पर्णवर्तनमप्यपाकीर्णमपाकृतम् । अतः पर्णापाकरणाद्धेतोः । प्रियं वदतीति प्रियंवदा । 'प्रियवशे वदः खच्' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । तां पार्वतीं पुराविदः पुराणज्ञास्तत्करणसमयेऽविद्यमानं पर्णभक्षणं यस्याः सापर्णेति वदन्ति । नामान्तरसमुच्चयार्थश्चकारः । अत्र 'अपर्णाम्' इत्यपपाठ इतिशब्दाभिहिते द्वितीयानुपपत्तेः । यथाह वामनः— 'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात्' इति । स्वयं प्रियंवदाः परेषामपि प्रियवादभाजनानि भवन्तीति भावः ॥

The state of maintaining [ oneself ] on leaves of trees (द्रुमपर्णवृत्तिता) fallen of their own accord (स्वयंविशीर्ण) is, undoubtedly (hi) the highest limit (काष्ठा) of austerities. By her, however (punah), even that was cast away. Hence [ those ] conversant with [ matters of ] old [times], speak of her, of agreeable speech (priyamvadām) as अपर्णा [ or, *alternatively, those conversant with matters of old* times (who are themselves priyamvadah) of agreeable speech, call her अपर्णा ].—28

**मृणालिकापेलवमेवमादिभिर्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ।**
**तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥ २९ ॥**

मृणालिकेति ॥ मृणालिकापेलवं पद्मिनीकन्दकोमलं स्वं स्वकीयमङ्गं शरीरमेवमुक्तप्रकारैस्तोयाग्निमध्यवासव्रतमादिर्येषां तैर्व्रतैरहश्च निशा चाहर्निशम् । समाहारे द्वन्द्वैकवद्भावः । अत्यन्तसंयोगे द्वितीया । ग्लपयन्ती कर्शयन्ती सा पार्वती कठिनैः क्लेशसहैरित्यर्थः । शरीरैरुपार्जितं संपादितं तपस्विनामृषीणां तपो दूरमत्यन्तमधश्चकार तिरश्चकार । अतिशिश्य इत्यर्थः । तपस्विभिरप्येवं तपः कर्तुं न शक्यत इति तात्पर्यार्थः ॥

She, causing to be reduced her own body, delicate like a small stalk of a lotus, by vows such as this and others (*evamādibhih*), by day and by night, far (dūram) surpassed [ lit., threw down ] the penance of ascetics secured, thanks to [ lit., by their ] tough bodies.—29.

**अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।**
**विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥ ३० ॥**

अथेति ॥ अथानन्तरमजिनं कृष्णमृगत्वक् । आषाढः प्रयोजनमस्येत्याषाढः पालाशदण्डः । 'पालाशो दण्ड आषाढः' इत्यमरः । 'विशाखाषाढादण्मन्थदण्डयोः' इत्यण्प्रत्ययः । तयोर्धरस्तथोक्तः प्रगल्भवाक्प्रौढवचनो ब्रह्ममयेन वैदिकेन तेजसा । ब्रह्मवर्चसेनेत्यर्थः । ज्वलन्निव स्थितः । इवशब्दो निर्धारणार्थः ।

विधिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम्।
उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः॥ ३२॥

विधीति ॥ स ब्रह्मचारी विधिना प्रयुक्तामनुष्ठितां सत्क्रियां पूजां परिगृह्य स्वीकृत्य क्षणं परिश्रमं विश्रामं च विनीय नाम। नामेत्यपरमार्थे। अथोमामृजुनैव विलासरहितेनैव चक्षुषा पश्यन्ननुज्झितक्रमोऽत्यक्तोचितपरिपाटीकः सन्। वक्तुं प्रचक्रमे प्रारेभे॥

*Having accepted the honour done* ( prayukta ) *in keeping* with the [ s'āstric ] rules ( vidhi ), and having feignedly ( nāma ) removed ( viniya, lit., led away ) fatigue, for a moment, he looking at Umā with just a straight [ i. e. free altogether from gallantry or 'sexual immorality' ] eye, began speaking, not casting off ( anujjhita ) the due decorum ( kramah ).—32.

अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते।
अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम्॥३३॥

अपीति ॥ अत्रापिशब्दः प्रश्ने। क्रियार्थं होमादिकर्मानुष्ठानार्थम्। समिधश्च कुशाश्च समित्कुशम्। 'जातिरप्राणिनाम्' इति द्वन्द्वैकवद्भावः। सुलभमपि सुलभं कच्चित्। जलानि ते तव स्नानविधिक्षमाणि स्नानक्रियायोग्यान्यपि कच्चित्। किंच स्वशक्त्या निजसामर्थ्यानुसारेण तपसि प्रवर्तसेऽपि। देहमपीडयित्वा तपश्चरसि कच्चिदित्यर्थः। युक्तं च नामैतत्। खलु यस्माच्छरीरमाद्यं धर्मसाधनम्। धर्मस्तु कायेन वाचा बुद्ध्या धनादिना च बहुभिः साध्यते तेषु च वपुरेव मुख्यं साधनं सति देहे धर्मार्थकाममोक्षलक्षणाश्चतुर्वर्गाः साध्यन्ते। अतएव 'सततमात्मानमेव गोपयीत' इति श्रुतिः॥

"Are the sacrificial sticks and Kus'a grass easily obtainable to you? [ Likewise ] are there waters suitable [ क्षमाणि, lit., capable of ] for the performance ( vidhi ) of [your] bath? Are you active in [regard to] your austerities, [ quite ] in accordance with your [ bodily ] strength? The

body, is verily ( khalu ), the foremost [ lit., the first ] means for [ the performance of sacred ] duty.—33.

अपि त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा ॥ ३४ ॥

अपीति ॥ त्वयावर्जितेन सिक्तेन वारिणा संभृतं जनितमासां वीरुधां लतानां प्रवालं पल्लवमनुबन्ध्यप्यनुस्यूतं किम् । यत्प्रवालं चिरोज्झितश्चिरकालत्यक्तो लाक्षारागो येन तत्तथापि पाटलम् । स्वभावरक्तमित्यर्थः । तेन चिरोज्झितालक्तकपाटलेन ते तव दन्तवाससाधरेण । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी' इत्यमरः । तुलां साम्यमारोहति । गच्छतीत्यर्थः । अत्र तुलाशब्दस्य सादृश्यवाचित्वात्तद्योगेऽपि 'तुल्यार्थैरतुलोपमाभ्याम्–' इति न तृतीयाप्रतिषेधस्तत्र सूत्रे सदृशवाचिन एव ग्रहणादिति ॥

" Are the tender leaves of these creepers, nourished [ lit. produced ] by water sprinkled by you, continuous [—ly growing, anubandhi ] [ the leaves ] that attain [ lit., mount ] comparison with your lower lip, red [ pāṭala ], [ though it has ] since long given up the alaktaka ( lac ) dye?—34.

अपि प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु ।
य उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव प्रयुञ्जते ॥३५॥

अपीति ॥ करस्थान्दर्भान्प्रणयेन स्नेहेनापहरन्तीति ते तथोक्तेषु । नापराधेष्विति भावः । 'करस्थदर्भप्रणयापराधिषु' इति पाठे दर्भाणां प्रणयेन प्रार्थनयापराधिषु हरिणेषु विषये ते मनः प्रसन्नमपि न क्षुभितं किम् । नापराधेष्वपि न कोपितव्यं तपस्विभिरिति भावः । हे उत्पलाक्षि, ये हरिणाः प्रचलैश्चञ्चलैर्विलोचनैर्नेत्रैस्तवाक्षिसादृश्यं प्रयुञ्जत इवाभिनयन्तीव । प्रसन्नत्वान्मृगनेत्राणि स्वनयनैः साम्यमुपयान्तीति भावः । 'उत्पलश्रोत्रचलैः' इति पाठान्तरं उत्पलवत्प्रचलैः । भावानयने द्रव्यानयनमिति न्यायेन शिष्यमाणोत्पलचलैरित्यर्थः ॥

" Is your mind unagitated [ lit., pleased prasannam ] in regard to the deer that take away the darbha [ blades ] on

[your] hands, in affection (प्रणय) [alternatively, with अपराधिषु as the reading instead of अपहारिषु " Is your mind unagitated in regard to the deer that offend you, out of their affection [ i. e. greed ] for the *darbha* grass on your hands],—[ these deer ] which, oh lotus-eyed [ one ], display a similarity with your eyes, by their eyes [ that are ] excessively (pra ) tremulous ?—35.

यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथा हि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥

यदिति ॥ हे पार्वति, रूपं सौम्याकृतिः पापवृत्तये पापाचरणाय न भवतीति यदुच्यते । लोकैरिति शेषः । तद्वचो न व्यभिचरति न स्खलतीत्यव्यभिचारि सत्यम् । ' यत्राकृतिस्तत्र गुणाः ' ' न सुरूपाः पापसमाचारा भवन्ति ' इत्यादयो लोकवादा न विसंवादमासादयन्तीत्यर्थः । किमिति ज्ञायते—तथा हि । हे उदारदर्शने आयताक्षि । सुरूपे इत्यर्थः । अथवोन्नतज्ञाने । विवेकवतीत्यर्थः । ते तव शीलं सद्वृत्तम् । ' शीलं स्वभावे सद्वृत्ते ' इत्यमरः । तपस्विनामप्युपदिश्यतेऽनेनेत्युपदेशः प्रवर्तकं प्रमाणं तत्तामुपदेशतां गतं प्राप्तम् । मुनयोऽपि त्वां वीक्ष्य स्ववृत्ते प्रवर्तन्त इति भावः ॥

" That statement ( *vachah* ) which is [ often ] made ( *uchyate* ), oh Pārvati, that [ excellent ] form is not for [ i. e. does not go hand in hand with, is incompatible with ] sinful behaviour, is absolutely true [ lit. is not having a deviation ( *vyabhichāra* ), For, oh wide-eyed [one], your noble conduct has reached the state of being [ little less than a regular course of ] instruction ( *upadeśatā* ), even to the [ avowed or professional ] ascetics.—36.

विकीर्णसप्तर्षिबलिप्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥ ३७ ॥

विकीर्णेति ॥ एष महीधरो हिमवान् । सप्त च ते ऋषयश्च सप्तर्षयः । 'दिक्संख्ये संज्ञायाम्' इति समासः । विकीर्णैः पर्यस्तैः सप्तर्षीणां संबन्धिभिर्बलिभिः पुष्पोपहारैः प्रहसन्ति ये तथोक्तैर्दिवोऽन्तरिक्षाच्च्युतैर्गाङ्गैः सलिलैस्तथा न पावितः । अनाविलैरकलुषैस्त्वदीयैश्चरितैर्यथा सान्वयः सपुत्रपौत्रः पावितः पवित्रीकृतः ॥

"This mountain [ Himālaya ] along with the [entire] line [ of ancestors ] has not been sanctified to the same extent (tathā) by the waters of the Ganges, dropped down from heaven, [ and ] smiling brightly ( prahāsibhih ) with the worship—material [ such as flowers etc ] of [ i. e. offerd by ] the seven sages which gets itself scattered about ( विकीर्ण ), to which (yathā ) [ the mountain is sanctified ] by your pure activities.—37.

अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भाविनि ।
त्वया मनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥

अनेनेति ॥ हे भाविनि प्रशस्ताभिप्राये, अनेन कारणेन धर्मः सविशेषं सातिशयमद्य मे । त्रयाणां धर्मकामार्थानां वर्गस्त्रिवर्गः । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः' इत्यमरः । तत्र सारः श्रेष्ठः प्रतिभाति । यद्यस्मात्कारणान्मनसो निर्विषयावर्थकामौ यस्यास्तया त्वयैको धर्म एव प्रतिगृह्य स्वीकृत्य सेव्यते । यत्त्वयार्थकामौ विहाय धर्म एवावलम्बितः । अतः सर्वेषां नः स श्रेयानिति प्रतिपद्यत इत्यर्थः ॥

Oh [ lady ] of excellent thoughts [ bhāvini or with bhāmini, oh fortunate lady ] [ the performance of sacred ] duty appears to me, [ to be ] especially ( सविशेषम् ) best of the group of three [ Dharma, Artha and Kamā ], to day, by [ reason of ] this [ fact ], that [ yat ], by you with a mind that has Artha [ winning of wealth ] and Kāma [ satisfaction of the carnal desire ], deprived of their objects ( निर्विषयौ ) [ in other words, without any the least scope], only one [viz., Dharma], having been accepted, is being followed ( sevyate ).—38.

संप्रति मनोरथं जिज्ञासुः प्रस्तौति—

**प्रयुक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि।**
**यतः सतां संनतगात्रि संगतं मनीषिभिः साप्तपदीनमुच्यते॥३९॥**

प्रयुक्तेति॥ आत्मना त्वया प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयो यस्य तं मां परमन्यं संप्रतिपत्तुमवगन्तुं नार्हसि। हे संनतगात्रि संनताङ्गि। 'अङ्गगात्रकण्ठेभ्यः' इति वक्तव्यान्ङीप्। यतः कारणान्मनस ईषिभिर्मनीषिभिर्विद्वद्भिः। शकन्ध्वादित्वात्साधुः। सतां संगतं सख्यं सप्तभिः पदैरवाप्यत इति साप्तपदीनं सप्तपदोच्चारणसाध्यमुच्यते। तथावयोस्त्वत्कृतसत्कारप्रयोगादेव सिद्धमित्यर्थः। 'साप्तपदीनं सख्यम्' इति निपातनात्साधु॥

"It does not behve you ( na arhasi ) to takeme ( sampratipattum ) to whom an excellent welcome has been offered, [ to be a ] stranger [ param ], in so far as, oh [ you ] with drooping limbs, the friendship [ lit., coming together ] of the good, is by the learned declared to be [ one ] that is formed by [ an exchange of ] seven words.—39.

**अतोऽत्र किंचिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः।**
**अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि॥४०॥**

अत इति॥ हे तपोधने, अतः सख्याद्धेतोरत्र प्रस्तावे बहुक्षमाम्। बहूक्तिसहाम् यद्वा क्षमावतीम्। भवतीं त्वां द्विजातिभावाद्ब्राह्मणत्वादुपपन्नचापलः सुलभधाष्टर्योऽयं जनः। स्वयमित्यर्थः। किंचित्प्रष्टुं मनो यस्य स किंचित्प्रष्टुमनाः प्रष्टुकाम.। 'तुं काममनसोरपि' इति मकारलोपः। रहसि भवं रहस्यं गोप्यं न चेत्प्रतिवक्तुमर्हसि॥

"On this account ( atah ), this person here [ i. e. I ] with his [ or my ] boldness [ easily ] explicable [ or justifiable], ( upapanna ) on account of his [or my] being a twice-born [ i. e. a Brāhmana, ] has [or have] a mind to ask you, of great forbearance, something in this [ matter ] ( atra );

oh [ lady ] with penance as your riches, if [ that be ] not a secret, it would behove you (*tvam arhasi* ) to reply.—40

प्रत्युवाच—

कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयस्तपःफलं स्यात्किमतः परं वद ॥४१॥

कुल इति ॥ प्रथमस्य वेधसो हिरण्यगर्भस्य कुलेऽन्ववाये प्रसूतिरुत्पत्तिः । 'यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वरः' इति ब्रह्मपुराणवचनात् । वपुः शरीरं त्रयाणां लोकानां सौन्दर्यमिवोदितमेकत्र समाहृतम् । ऐश्वर्यसुखं संपत्सुखममृग्यमन्वेषणीयं न भवति । किंतु सिद्धमेवेत्यर्थः । वयो नवम् । यौवनमित्यर्थः । अतः परमतोऽन्यत्किं तपःफलं स्याद्वद । अस्ति चेदिति शेषः । न किंचिदस्तीत्यर्थः ॥

" Birth in the family of the first Creator ( *vedhah*); this form that has risen [ even ] like the beauty of the three worlds [ put together ]; the happiness that accrues to [ one in possession of ] wealth ( ऐश्वर्यसुखम् ) in, not to be sought for ; fresh youth [—all these are at your disposal]; tell me, what [ else ] higher than this, can be the fruit of austerities ?—41

भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि त्वयि ॥४२॥

भवतीति ॥ दुःसहात्सोढुमशक्यादनिष्टादप्रियादिष्टतादपि मनस्विनीनां धीरस्त्रीणामीदृशी तपश्चरणलक्षणा प्रतिपत्तिः प्रवृत्तिः । 'प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ प्रागल्भ्ये' इति केशवः । भवति नाम । नामेति संभावनायाम् । विचारमार्गे प्रहितेन चेतसा चित्तेन तदनिष्टं च । हे कृशोदरि, त्वयि न दृश्यते । विचार्यमाणे तदपि नास्त्यसंभावितत्वादित्यर्थः ॥

" There possibly ( *nāma* ) is a tendency ( *pratipattih* ) of this sort on the part of spirited ladies, even on account of some undesirable [ occurence or event ], difficult to bear;

that too ( tat cha ) is not seen in you, oh you of slender belly by [ my ] mind sent along the path of thought.—42.

आनिष्टाभावमेव प्रपञ्चयति—

अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे ।
पराभिमर्शो न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये ॥ ४३ ॥

अलभ्येति ॥ हे सुभ्रु, इयं त्वदीयाकृतिर्मूर्तिरलभ्यो लब्धुमनर्हः शोकेन भर्त्राद्यवमानजेन दुःखेनाभिभवस्तिरस्कारो यस्याः सा तथोक्ता । दृश्यत इति शेषः । असंभावितश्चायमर्थ इत्याह—पितुर्गृहे विमाननावमानः कुतः । न संभाव्यत एवेत्यर्थः । 'सुभ्रुः कुतस्तातगृहेऽवमाननम्' इति पाठान्तरकरणं तु साध्वसमेवोक्तोपपत्तिसंभवात् । अन्यत्रापि 'सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ता 'कथा योषिताम्' इत्यादिप्रयोगदर्शनाद्वंशस्थवृत्ते पादादौ जगणभङ्गप्रसङ्गाच्चेत्यलं गोष्ठीभिः । न चान्यस्माद्भावीत्याह—पराभिमर्शः परधर्षणं तु तव नास्ति । पन्नगरत्नसूचये फणिशिरोमणिशलाकां ग्रहीतुमित्यर्थः । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । करं हस्तं कः प्रसारयेत् 'सुभ्रु' इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् 'नेयङुवङ्स्थानावस्त्री' इति नदीसंज्ञाप्रतिषेधात् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वं नास्ति । तेन ह्रस्वः प्रामादिक इति केचित् । अन्ये तु 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यत्र 'अलाबूः' 'कर्कन्धूः' इत्युकारान्तादप्यूङ्प्रत्ययमुदाजहार भाष्यकारः । एतस्मादेव ज्ञापकात्क्वचिदूकारान्तस्याप्यूङन्तत्वान्नदीत्वे ह्रस्वत्वमित्याहुः । अतएवाह वामनः—'ऊकारादप्यूङ्प्रकृतेः' इति ॥

"This [ beautiful ] figure ( âkriti ) [ of yours ] is one in the case of which humiliation due to grief is impossible of obtainment. Whence can there be disregard [ for you ], oh you of beautiful eye-brows, in the house of [ your ] father? Touch at the hands of a stranger, [ simply ] exists not in your case. Who would [dare ] stretch out his hand for the pointed ( sûchi ) gem [ on the hood ] of a serpant [ or, with sûtaye as the reading instead of sûchaye, who would dare stretch out his hand for the

disturbance and removal of the gem on the hood of a serpant ]?—43.

किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥ ४४ ॥

किमिति ॥ हे गौरि, किमिति केन हेतुना यौवने त्वयाभरणान्यपास्य विहाय । वृद्धस्य भावो वार्धकम् । मनोज्ञादित्वाद्वुञ्प्रत्ययः । 'वार्धकं वृद्धसंघाते वृद्धत्वे । वृद्धकर्मणि' इति विश्वः । तत्र शोभत इति वार्धकशोभि वल्कलं धृतम् । प्रदोषे रजनीमुखे स्फुटाः प्रकटाश्चन्द्रस्तारकाश्च यस्याः सा स्फुटचन्द्रतारका विभावरी रात्रिररुणाय सूर्यसुताय कल्पते यद्यरुणं गन्तुं कल्पते किम् । वद ब्रूहि । 'क्रियार्थोपपदस्य—' इत्यादिना चतुर्थी । दीप्यमानशशाङ्कतारके प्रदोषे यद्यरुण उदेति ततो विभूषणापहारेण तव वल्कलधारणं संघटत इति भावः ॥

" For what has the bark garment becoming old age, been worn by you, after having thrown away ( *apāsya* ) [ your ] ornaments [ just ] in [ your ] youth ? ? Say, whether ( *yadi* ), the night with the moon and the stars manifest, is fit for approaching the harbinger of the sun [ i. e. for coming to an untimely or premature end ] in [just her] fore-part [or beginning or youth, प्रदोष]. —44.

तपःप्रयोजनं निराकर्तुमाह —

दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥४५॥

*दिवमिति ॥ दिवं स्वर्गं प्रार्थयसे* कामयसे यदि तर्हि श्रमस्तपश्चरणप्रयासो वृथा निष्फलः । यदि स्वर्गार्थं तप्यसे ततः श्रमं मा कार्षीः । कुतः । तव पितुर्हिमवतः प्रदेशा देवभूमयः स्वर्गप्रदेशाः तत्सदृशा इत्यर्थः । अथोपयन्तारं वरं प्रार्थयसे तर्हि समाधिना तपसालम् न कर्तव्यमित्यर्थः । निषेध्यस्य निषेधं प्रति करणत्वात्तृतीया । तथाहि । रत्नं कर्तृ । नान्विष्यति न मृगयते । ग्रहीतारमिति

शेषः । किंतु तदर्थं मृग्यते प्रार्थ्यते अर्हिभिरिति शेषः । न हि वरार्थं त्वया तपसि वर्तितव्यं किंतु तेनैव त्वदर्थमिति भावः ॥

"If you are eagerly desiring [ to win ] heaven, in vain [ is your ] effort. The regions [ in the possession ] of your father [ Himālaya ] are the residences ( bhūmayah ) of gods. Next ( atha ), [ if you eagerly desire to secure ] a husband, enough of concentration [ of mental powers for penance ]; a jewel seeks not [ rather, hi ] it is sought after [ by the needy ].—45.

वरवाचकाक्षरश्रवणानन्तरमेव देव्या उष्णोच्छ्वासमालक्ष्य, प्रश्नेषु न प्रत्युत्तर-मनुपलभ्य स्वयमेवाशङ्क्याह—

निवेदितं निश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥४६॥

निवेदितमिति ॥ सोष्मणा निश्वसितेन निश्वासवायुना निवेदितम् । चिन्तानुभावेनोष्णोच्छ्वासेन ते वरार्थित्वं सूचितमित्यर्थः । तर्हि किं प्रश्नव्यसनेनेत्याह—मनस्तु तथापि मे संशयमेव गाहते प्राप्नोति । कुतः । ते तव । 'कृत्यानां कर्तरि वा' इति षष्ठी । प्रार्थयितव्यः प्रार्थयितुमर्ह एव न दृश्यते । प्रार्थितदुर्लभः प्रार्थितो यो दुर्लभः स कथं भविष्यति । नास्त्येवेत्यर्थः ॥

" By your hot ( सोष्मणा, lit., accompanied by heat ) sigh [ the reason for your practising austerities ] has been told. My mind, however, entertains [ lit., bathes in ] a doubt [ even ] a single ( eva ) [ person ] eagerly to be desired by you is not [ to be ] seen; how will [ he ] be difficult of being secured on being sought after [ by you ].—46.

अथ पतिप्रार्थनामेव सिद्धवत्कृत्वाह—

अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते ।
उपेक्षते यः श्लथलम्बिनीर्जटाः कपोलदेशे कलमाग्रपिङ्गलाः ॥४७॥

अहो इति ॥ अहो चित्रम् । तवेप्सित आप्तुमिष्टो युवा कोऽपि स्थिरः कठिनः । वर्तत इति शेषः । कुतः । यो युवा चिराय चिरात्प्रभृति कर्णोत्पलशून्यतां गते प्राप्ते कपोलदेशे गण्डस्थले श्लथाः शिथिलबन्धना अतएव लम्बिन्यस्ताः श्लथलम्बिनीः कलमः शालिविशेषास्तेषामग्राणि तद्वत्पिङ्गला जटा उपेक्षते । यस्त्वामीदृशीं दृष्ट्वा न व्यथते स नूनं वज्रहृदय इत्यर्थः ॥

"Oh, hard [—hearted, स्थिर, indeed ] is the young man desired by you, whoever ( kopi ) [ he be ], who ignores the matted hair hanging loosely, tawny like the sprouts of paddy, on the region of your cheeks, which has reached a state of being devoid of the lotus on the ear [ used as an ornament ], all this long (chirāya ).—47.

मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥४८॥

मुनिव्रतैरिति ॥ मुनिव्रतैश्चान्द्रायणादिभिरतिमात्रमत्यन्तं कर्शितां दिवाकरेण सूर्येणाप्लुष्टानि दग्धानि वातातपसंस्पर्शान्मृदुत्वाच्च श्यामीकृतानि विभूषणास्पदानि भूषणस्थानानि यस्यास्तां तथोक्ताम् । अतएव दिवाहनि शशाङ्करेखामिव स्थितां त्वां पश्यतः सचेतसो जीवतः कस्य पुंसो मनो न दूयते न परितप्यते । अपि तु सर्वस्यैवेत्यर्थः ॥

"The mind of what person, is not afflicted to see [ पश्यतः ] you, extremely reduced by the sages' vow, with the places of ornaments [ on your body ] scorched by the sun [ 's rays and, therefore, looking ] like the digit of the moon by day [ extremely emaciated, and with the function (āspada ) of beautifying the whole world being snatched away ( आप्लुष्ट ) by the sun ] ?—48.

अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥४९॥

अवैमीति ॥ तव प्रियं वल्लभं सौभाग्यमदेन सौन्दर्यगर्वेण कर्त्रा । वञ्चितं विप्रलब्धमवैमि वेद्मि । प्रियश्चतुरं मधुरमवलोकत इति चतुरावलोकिनाऽराल-क्ष्मणः कुटिलरोम्णः । 'अरालं वृजिनं जिह्मम्' इत्यमरः । अस्य त्वदीयस्य चक्षुष आत्मीयं वक्त्रं मुखं चिरं लक्ष्यं विषयं न करोति । दृष्टिपथं न गच्छतीत्यर्थः । तदयं गर्वेण हतो निष्फलात्मलाभो जात इति भावः ॥

"I know your beloved to have been duped by [ his ] pride of beauty, in that he [ lit., who, यः ] does not, for long, make his own face the mark for this eye of yours that beholds in so lovely ( *chaturam* ) [ lit., clever ] a manner [ and ] has curved eye-lashes.—49.

**कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसंचितं तपः ।**
**तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम् ५०**

कियदिति ॥ हे गौरि, कियत्किंप्रमाणकम् । किमवधिकमित्यर्थः । चिरं श्राम्यसि तपस्यसि । अत्यन्तसंयोगे द्वितीया । ममापि पूर्वाश्रम- प्रथमाश्रमो ब्रह्मचर्याश्रम-स्तत्र संचितं संपादितं तपो विद्यते अर्धश्चासौ भागश्च तेन तस्य तपसोऽर्धभागेनैक-देशेन काङ्क्षितमिष्टं वरमुपयन्तारं लभस्व । तं वरं साधु सम्यग्वेदितुं ज्ञातुमिच्छामि । यद्यसौ योग्यो भवति तदा ममापि संमतिरिति भावः ॥

"How long are you going to toil [ or fatigue yourself, *s'rāmyasi* ]; oh Gaurī! [ to ] my [ credit ] even, [ there is ] penance accumulated during the first ( *pūrva* ) stage of life [ i. e. Brahmacharya ]. Do you obtain the desired [ one ] with half the share of it. And [ *cha*, as one more thing ], I wish to know him well [ i. e. in a detailed manner ]."—50.

**इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।**
**अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥**

इतीति ॥ इतीत्थं द्विजन्मना द्विजेन प्रविश्यान्तर्गत्वा । आप्तवद्रहस्यमुद्रा-भ्येत्यर्थः । अभिहितोक्ता सा पार्वती मनोगतं हृदिस्थं वरं शंसितुं वक्तुं न शशाक

समर्था नाभूत्। लम्भयेति शेषः। अथोऽनन्तरं परिपार्श्ववर्तिनीं वयस्यां सखीं विवर्तितं विचालितमनञ्जनं व्रतवशाद्वर्जितकज्जलं नेत्रं यस्मिन्कर्मणि तत्तथैक्षत। नेत्रसंज्ञयैव प्रत्युत्तरं वाचयांचकारेत्यर्थः॥ 38152

She thus addressed by the twice-born [ one ] after [ his ] having secured an entrance [ into her confidence,. i. e. having won her confidence ], was not able to speak out ( s'amsitum ) [ her ] mind [ lit., the (thought) contained in her mind ]. Then ( atha u ), [ she ] looked at her female friend, who constantly used to be by her side, having turned [her] eyes, devoid of collyrium ( an-anjane ) [towards the latter ].—51.

सखी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम्।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः॥ ५२॥

सखीति॥ तस्याः पार्वत्या इयं तदीया सखी वयस्या तम्। 'वर्णः प्रशस्तः' इति क्षीरस्वामी। सोऽस्यास्तीति वर्णिनं ब्रह्मचारिणम्। 'वर्णाद्ब्रह्मचारिणि' इतीनिप्रत्ययः। उवाच ब्रूते स्म। किमिति। हे साधो विद्वन्, तव कुतूहलं चेत्। श्रोतुमस्तीति शेषः। तर्हि निबोधावगच्छ। आकर्णयेत्यर्थः। 'बुध अवगमने' इति धातोर्भौवादिकाल्लोट्। श्रोतव्यं किं तदाह—यस्मै लाभायेदं यदर्थम्। 'अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति वक्तव्यम्' इति वार्तिकनियमात्क्रियाविशेषणम्। एतया पार्वत्याम्भोजं पद्ममुष्णवारणमातपत्रमिव वपुः शरीरं तपःसाधनं कृतम्' तपःप्रवृत्तिकारणमुच्यते श्रूयतामित्यर्थः॥

The female friend of that [ Pārvati ] said to that celibate student of Veda ( वर्णिनम् ब्रह्मचारिणम् ), 'know fully, oh good man ! if there is curiousity on your part, [ that ] for which, by this one has been made her body a means for penance [ even ] like a lotus [ being used as ] the warder off of [ i. e. as an umbrella protecting one against the ] heat [ of the sun ]."—52.

'दृष्मनःसङ्गसंकल्पो जागरः कृशतारतिः । ह्रीत्यागोन्मादमूर्छान्ता इत्यनङ्गदशा दश ॥' इति । तत्रास्याः काश्चिद्दशाः क्रममनादृत्यैव योजयति 'इयम्' इत्यादिभिः षड्भिः श्लोकैः—

**इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।**
**अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति॥ ५३ ॥**

इयमिति ॥ मानिनीन्द्राणीप्रभृतीरतिशय्य वर्तितव्यमित्यभिमानवतीयं पार्वत्यधिश्रियोऽधिकैश्वर्यान्महेन्द्रप्रभृतीनिन्द्रादींश्चतसृणां दिशामीशानिन्द्रवरुणयमकुबेरान् । 'तद्धितार्थ—' इत्यादिनोत्तरपदसमासः । अवमत्यावधूय मदनस्य निग्रहान्निबर्हणाद्धेतोः । अकामुकत्वादित्यर्थः । रूपेण सौन्दर्येण हार्यो वशीकरणीयो न भवतीत्यरूपहार्यं पिनाकः पाणौ यस्य तं पिनाकपाणिं हरम् । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत.' इति साधु । पतिं भर्तारमाप्तुमिच्छति । एतेन संकल्पावस्था सूचिता ॥

"This [ Pārvati ] here, [ extremely ] proud, having disregarded the lords of the four quarters, Indra and others, possessed of great wealth, desires to secure as [ her ] husband, the [ god ] with the Pināka [ bow in his ] hand, who can not be enticed by beauty, by reason of [ his ] thwarting ( nigraha ) of Madana.—53.

**असह्यहुंकारनिवर्तितः पुरा पुरारिमप्राप्तमुखः शिलीमुखः ।**
**इमां हृदि व्यायतपातमक्षिणोद्विशीर्णमूर्तेरपि पुष्पधन्वनः ॥५४॥**

असह्येति ॥ पुरा पूर्वमसह्येन सोढुमशक्येन हुंकारेण रौद्रेण निवर्तितः । अतएव पुरारिं हरमप्राप्तमुखोऽप्राप्तफलो विशीर्णमूर्तेर्नष्टशरीरस्यापि पुष्पधन्वनः कामस्य शिलीमुखो बाण इमां पार्वतीं हृदि व्यायतः । सुदूरावगाढ इति यावत् । तादृक्पातः प्रहारो यस्मिन्कर्मणि तत्तथाक्षिणोदकर्शत् । दग्धदेहस्यापि मार्गणो लग्नः । 'मृदुः सर्वत्र बाध्यते' इति भावः । अनेन 'विवृण्वती शैलसुतापि भावम्' ( ३ । ६८ ) इत्यत्रोक्तं चक्षुःप्रीतिमनःसङ्गाख्यमवस्थाद्वयमनन्तरप्रस्थोपयोगितयानूद्य कार्श्यावस्था सूचिता ॥

तगानजनितमदनवेदनामेनां वीक्ष्य किंनर्योऽपि रुरुदुरिति भावः। अत्र वर्णस्खलन-लक्षणकार्योक्त्या पुनः पुनस्तत्कारणीभूतमूर्च्छावस्थाप्रादुर्भावो व्यज्यतेऽन्यथा सखीरोदनानुपपत्तेरिति। द्वादशावस्थापक्षे तु प्रलापावस्था च व्यज्यते। 'प्रलापो गुणकीर्तनम्' इत्यालंकारिकाः ॥

"When the life of Pināki [ S'ankara ] had songs [ in its honour ] taken up [ for singing ], this one [ Pārvati ] here, many a time, made the young kinnara—princesses, her *female companions in singing in the forest-regions*, weep, by [ her ] words that faltered in the throat [ choked ] with tears.—56 .

**त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।**
**क्व नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥५७॥**

त्रिभागेति ॥ किंचेति चार्थः। शिष्यत इति शेषः। कर्मणि घञ्। त्रिभ्यो भागेभ्यः शेषास्ववशिष्टासु। यद्वा रात्रेस्त्रियामत्वेन प्रसिद्धत्वात्तृतीयो भागस्त्रि-भागः। संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते। यथा 'शतांशः' 'सहस्रांशः' इति। त्रिभागः शेषो यासां तासु निशासु क्षणं क्षणमात्रं नेत्रे निमील्य मीलयित्वा सहसा सद्यः। हे नीलकण्ठ, क्व व्रजसि कुत्र गच्छसीत्यलक्ष्या निर्विषया वाग्वचनं यस्याः सा तथोक्ता तथासत्ये मिथ्याभूते कण्ठेऽर्पितं बाहुबन्धनं यस्याः सा तथा सती व्यबुध्यत विबुद्धवती। एतेन जागरोन्मादौ सूचितौ ॥

"And during nights with [ their ] third part remaining [ two thirds already having been passed without a wink of sleep ], [ Pārvati ] having closed [ her ] eyes for a moment, used to be awakened,—all on a sudden [ sahasā ], with *aimless* ( अलक्ष्यवाक् ) *words* '*Where oh Nilakantha ! are you going ?*' [ and ] with the noose [ lit., tie ] of [ her ] arms thrown round a non-existing ( asat ) neck.—57.

स्वप्नसादृश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शास्त्याश्चत्वारो विरहिणां विनोदाः। तत्र स्वप्नसंदर्शनमुक्त्वा प्रतिकृतिदर्शनमाह—

यदा बुधैः सर्वगतस्त्वमुच्यसे न वेत्सि भावस्थमिमं कथं जनम् ।
इति स्वहस्तोल्लिखितश्च मुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥५८॥

यदेति ॥ यदा । यत इत्यर्थः । यदेति हेताविर्युक्त्वा गणव्याख्यानेऽस्योदाहृतत्वात् । त्वं बुधैर्मनीषिभिः सर्वगतः सर्वव्यापीत्युच्यसे । तत इत्यध्याहारः । भावे रत्याख्ये तिष्ठतीति भावस्थम् । त्वय्यनुरागिणमित्यर्थः । इमं जनम् । इममित्यात्मनिर्देशः । कथं न वेत्सि न जानासीति मुग्धया मूढया । अकिंचित्करश्चित्रगतोपालम्भ इत्यजानानयेत्यर्थः । तया स्वहस्तेनोल्लिखितश्चित्रे लिखितश्चन्द्रशेखरो रहस्येकान्ते । सखीमात्रसमक्षमित्यर्थः । उपालभ्यत साधिक्षेपमुक्तश्च । उक्तसमुच्चयार्थश्चकारः । यद्यपि रहसीत्युक्तं तथापि सखीसमक्षकरणाल्लज्जात्यागो व्यज्यत एव ॥

" When you are described [ as ] omnipresent [ lit., gone everywhere ], by the learned, how do you not know this person [ i. e. me ] in love ( bhāvastha ) [ with you ]?'—thus, further, ( cha ) was the moon-crested [ god ] drawn [ in a picture ] by her own hand, secretly rebuked, by the simple one ( mugdhayā ).—58

यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥

यदेति ॥ जगत्पतेस्तस्येश्वरस्याधिगमे प्राप्तावन्यं विधिमुपायं विचिन्वती मृगयमाणा यदा नापश्यत्तदेयं पार्वती गुरोः पितुरनुज्ञयास्माभिः सह तपसे तपश्चरितुं तपोवनं प्रपन्ना प्राप्ता ॥

" And when, searching [ a good deal ] [ this one ] did not see any other means ( vidhi ) for the winning of that lord of the world, ( then-tadā ), along with us, [ Pārvati ] came to the penance-grove for [ practising ] austerities, with the permission of [ her ] father.—59

द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः ॥६०॥

द्रुमेष्विति ॥ सख्या पार्वत्या स्वयं कृतं जन्म येषां तेषु । स्वयं रोपितेष्वित्यर्थः । तपसः साक्षिषु साक्षाद्द्रष्टृष्वेषु द्रुमेष्वपि फलं दृष्टं लब्धम् । जनितमित्यर्थः । अस्याः पार्वत्याः शशिमौलिसंश्रयश्चन्द्रशेखरविषयो मनोरथस्तु प्ररोहाभिमुखोऽङ्कुरोन्मुखोऽपि न दृश्यते । 'प्ररोहस्त्वङ्कुरोऽङ्कुरः' इति वैजयन्ती । स्वयं रोपितवृक्षफलकालेऽप्यस्या मनोरथस्य नाङ्कुरोदयोऽप्यस्ति । फलाशा तु दूरापास्तेत्यर्थः ॥

"Even on these trees, brought into existence, by [ my ] friend, personally, and witnesses to [ her ] penance, is seen [ their ] fruit. Her cherished desire resorting to the god with the moon on his head is, however, not ( na cha ) seen to be ready for [ so much as ] a shoot.—60.

न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥६१॥

नेति ॥ प्रार्थितः सन्दुर्लभः प्रार्थितदुर्लभः स देवस्तपःकृशां तपसा कृशां क्षीणामतएव सखीभिरस्रोत्तरमश्रुप्रधानं यथा भवति तथेक्षितामिमां नः सखीं तस्येन्द्रस्यावग्रहेणानावृष्ट्या क्षतां पीडिताम् । 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमरः । अवग्रहः । वर्षप्रतिबन्ध इत्यर्थः । सीतां कृष्टभुवम् । 'सीता लाङ्गलपद्धतिः' इत्यमरः । वृषा वासव इव । 'वासवो वृत्रहा वृषा' इत्यमरः । कदाभ्युपपत्स्यते कदानुग्रहीष्यति न वेद्मि । अत्र वाक्यार्थः कर्म । तदवग्रहक्षतामित्यत्रावग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेरुदिति भिन्नं पदं वेद्मीत्यस्य कर्मेति युक्तमुत्पश्यामः ॥

"I do not know, when he, difficult to be obtained though solicited, would favour [ our ] friend, here, emaciated (krishām) by penance, and looked at by her friends, in a manner dominated by tears ( asrottaram ), like Indra [favouring ] the ploughed ground, dried up ( क्षताम् ) by draught [ caused by him ]."—61

अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥ ६२ ॥

अगूढेति ॥ इङ्गितज्ञया पार्वतीहृदयाभिज्ञया । 'इङ्गितं हृद्गतो भावः' इति सज्जनः । तया गौरीसख्येत्येवमगूढसद्भावं प्रकाशितसदभिप्रायं यथा तथा निवेदितो ज्ञापितो निष्ठा मरणमवधिर्यस्य स नैष्ठिको यावज्जीवब्रह्मचारी सुन्दरो विलासी । नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः । द्वयोरन्यतरस्य विशेषणत्वविवक्षायां विशेषणसमासः । किंतु नैष्ठिकत्वविशेषणेन कामित्वविरोधः । अथवा देवस्यालौकिकमहिमत्वादुभयं तात्त्विकमिति न विरोधः । अव्यञ्जितं हर्षलक्षणं मुखरागादि हर्षचिह्नं यस्य तथाभूतः सन् । अयि गौरि । अयीति कोमलामन्त्रणे । इदं त्वत्सखीभाषितमेवम् । सत्यं किमित्यर्थः । परिहासः केलिर्वा । 'द्रवकेलिपरीहासाः' इत्यमरः । इत्येवमुमामपृच्छत्पृष्टवान् ॥

The handsome, life-long ( नैष्ठिक ) Brahmachrin, thus informed by her who knew the secret of Pārvatī's heart, in a manner in which the real intention ( sadbhāva ) was disclosed, [ without disclosing signs of joy [ he felt ] inquired of Umā, ' O [ delicate ] one, is this so ? [ Or ] [ is it ] a jest ?"—62

अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमालिकाम् ।
कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवाचमालपत् ॥ ६३ ॥

अथेति ॥ अथानन्तरमद्रेस्तनया पार्वती मुकुलीकृताङ्गुलौ संपुटीकृताङ्गुलौ । अग्रश्चासौ हस्तश्चेति समानाधिकरणसमासः । हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदात् इति वामनः । तस्मिन्नग्रहस्ते स्फटिकानामक्षमालिकां जपमालिकां समर्पयन्त्यामुञ्चती कथंचिन्महता कष्टेन चिरव्यवस्थापितवाक्चिरेण स्वीकृतवाक् । एतेन लज्जोपरोधो व्यज्यते । मिताक्षरं परिमितवर्णं यथा तथालपत् बभाषे ॥

Then the daughter of the mountain, placing, the rosary of crystal beads, in [ her ] fore-hand, the fingers of which had been formed into a bud, having arranged ( lit., one who

arranged ) her speech after a long time, spoke some how ( i. e. with great difficulty ) in a manner, where the words were measured ( i. e. few ).—63

किमुवाचेत्याह—

**यथा श्रुतं वेदविदां वर त्वया जनोयमुच्चैःपदलङ्घनोत्सुकः ।**
**तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥ ६४ ॥**

यथेति ॥ हे वेदविदां वर वैदिकश्रेष्ठ, त्वया यथा श्रुतं सम्यक्श्रुतम् । श्रुतार्थमेवाह—अयं जनः । स्वयमित्यर्थः । उच्चैःपदस्य शिवलाभरूपोन्नतस्थानस्य लङ्घन आक्रमण उत्सुकः । किमत्रायुक्तमित्यत्राह—इदं तपस्तदवाप्तेस्तस्योच्चैःपदस्यावाप्तेः प्राप्तेः साधनं किल । किलेत्यलीके । अतितुच्छत्वादसाधकमेवेत्यर्थः । तर्हि त्यज्यतामित्याशङ्क्य दुराशा मां न मुञ्चतीत्याशयेनाह—मनोरथानां कामानामगतिरविषयो न विद्यते । न हि स्वशक्तिपर्यालोचनया कामाः प्रवर्तन्त इति भावः ॥

" O [ you ] the best among the learned in the Vedas, this person is eager to attain to the exalted position [ of *being the consort of S'iva* ], *in that [ same ] manner* ( *yathā* ) in which, you have heard from my friend. This penance is, I hope ( *kila* ), the means for obtaining it. [ There is ] no province that is not reached ( *agati* ) by one's cherished desires. "—64

**अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।**
**अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥६५॥**

अथेति ॥ अथ वर्णी ब्रह्मचारी । 'वर्णिनो ब्रह्मचारिणः' इत्यमरः । आह । उवाचेत्यर्थः । 'आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूलः' इत्याह वामनः । किमित्याह—महेश्वरो महादेवो विदितः । मया ज्ञायत इत्यर्थः । बुद्ध्यर्थत्वाद्वर्तमाने क्तप्रत्ययः । तद्योगात्षष्ठी च । येन त्वं प्राग्भग्नमनोरथा कृतेति भावः । पुनरेव त्वं तमीश्वरमर्थयसे तदर्थिन्येव तत्काममेव प्रवर्तसे । तत्प्रभावमनुभूयापीति भावः ।

पर्यालोचय। किमिति। कलहंसलक्षणं कलहंसचिह्नम्। 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः। वध्वा नवोढाया दुकूलं वधूदुकूलम्। 'वधूः स्नुषा नवोढा स्त्री' इति विश्वः। तथा शोणितबिन्दून्वर्षतीति तथोक्तम्। आर्द्रमित्यर्थः। गजाजिनं च कृत्तिवासश्च। तदपिनाकिन इत्याशयः। एते कदाचिन्मात्वपि योगं संगतिमर्हतो यद्यर्हतः किम्। एतत्त्वमेव चिन्तयेति पूर्वेणान्वयः। पाणिग्रहणकाले वधूवरयोर्वस्त्रान्तग्रन्थिः क्रियते। कृत्तिवाससा पाणिपीडने तु दुकूलधारिण्यास्तव कथं संघटिष्यत इति भावः॥

"Oh [ Pārvati ] do you just (tāvat) think out quite by yourself (tvam eva) whether these two [things] deserve union [ with each other ] [ these two namely ] the silken robe of the bride, with the figures (लक्ष्म, lit., marks) of royal swans [ drawn on it ] and the elephant-hide dripping forth drops of blood.—67.

चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते।
अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु॥६८॥

चतुष्केति॥ चतुष्के गृहविशेषे यः पुष्पप्रकरस्तत्रावकीर्णयोर्न्यस्तयोः। कुसुमास्तृतदिव्यभवनभूसंचारोचितयोरित्यर्थः। तव पादयोरलक्तकाङ्कानि लाक्षाङ्कितानि पदानि पादाकाराणि पादन्यासचिह्नानि। 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः। पादतच्चिह्नयोः' इति विश्वः। विकीर्णा विक्षिप्ताः केशाः शवशिरोरुहा यासु तासु विकीर्णकेशासु। 'अतत्स्थं तत्र दृष्टं च' इति वचनात् 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पान्न ङीप्। परेतभूमिषु प्रेतभूमिषु। श्मशानेष्वित्यर्थः। परोऽपि शत्रुरपि को नामानुमन्यते। न कोऽपीत्यर्थः। नामेति कुत्सायाम्। पिनाकपाणिपाणिग्रहणे तस्य परेतभूसंचारित्वेन साहचर्यात्तवापि तत्र संचारोऽवश्यंभावीति भावः॥

"Who would, even [ if he be ] an enemy, indeed, brook the idea (lit., agree with you) [ of seeing ] the foot-prints marked with the Alaktaka dye of your feet, [ first ] placed upon the cluster of flowers in the quadrangular courtyard

( चतुष्क ) [ at the time of the marriage ] [being later seen] on the ground of the dead, with hair scattered about [ on all sides ] ?—68

अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षः सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे पदं चिताभस्मरजः करिष्यति ॥६९॥

अयुक्तेति ॥ त्रिनेत्रवक्षः त्र्यम्बकालिङ्गनमित्यर्थः । तव तत्संबन्धितया सुलभमपि सुप्रापं च । भवतीति शेषः । तवेति शेषे षष्ठी । 'न लोकाव्यय-' इत्यादिना कृद्योगलक्षणषष्ठ्या निषेधात् । अतःपरमस्मात्त्रिनेत्रवक्षोलाभादन्यदयुक्तरूपमत्यन्तायुक्तं किं वद । न किंचिदित्यर्थः । 'प्रशंसायां रूपप्' इति रूपप्प्रत्ययः । कुतः । यद्यस्मात्कारणाद्धरिचन्दनास्पदे हरिचन्दनस्यास्पदे स्थानभूतेऽस्मिंस्तनद्वये चिताभस्म श्मशानभस्म तदेव रजश्चूर्णं कर्तृ । पदं करिष्यति पदं निधास्यति । भर्तुर्भवस्य भस्माङ्गरागादिति भावः ॥

"O, say, what thing more undecorous ( ayuktarūpam ) can there be than this that the particles of funeral ashes [lit., ashes from the funeral pyre ] easy to be obtained from the chest of S'iva [lit., the three eyed-god] will have a residence ( padam ) even on this pair of breasts of yours [ which is ] a proper abode for red-sandal [-powder ] ?—69

इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥७०॥

इयमिति ॥ इयं च ते तव पुरत आदावेवान्या विडम्बना । परिहास इत्यर्थः । या सेत्यध्याहारः—ऊढया परिणीतया । वहेः कर्मणि क्तः । वारणराजहार्यया त्वयाधिष्ठितमारूढं वृद्धमुक्षाणं वृद्धोक्षम् । 'अचतुर-' इत्यादिना निपातः । विलोक्य महाजनः साधुजनः स्मेरमुखः स्मितमुखो भविष्यत्युपहसिष्यति यत् । इयमिति पूर्वेण संबन्धः । स्मेरेति 'नमिकम्पिस्म्यजस-' इत्यादिना रप्रत्ययः ॥

"And this again would be another mockery of yours [ only ] to start with ( पुरतः ), that the great [illegible] will be having smiling faces on looking at the super-annuated

( vriddha ) bull, mounted by you, wedded [ to S'iva ] and worthy of being borne by a lordly elephant.—70

**द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः ।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ७१**

द्वयमिति ॥ पिनाकिन ईश्वरस्य समागमप्रार्थनया प्रातिकामनया । क्रियमाणयेति शेषः । संप्रति द्वयं शोचनीयतां शोच्यत्वं गतम् । किं तदाह—सा प्रागेव हरशिरोगता । अत्र सेति प्रसिद्धार्थत्वान्न यच्छब्दापेक्षा । तदुक्तं काव्यप्रकाशे—'प्रकान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते' इति । कान्तिमती । नित्ययोगे मतुप् । कलावतश्चन्द्रस्य कला षोडशो भागश्चास्य लोकस्य नेत्रकौमुदी । नेत्रानन्दिनीत्यर्थः । त्वं च । कान्तिमतीत्वनेत्रकौमुदीत्वविशेषणयोरुभयत्राप्यन्वयः । प्रागेवैव शोच्या । संप्रति तु त्वमप्यपरेति द्वयं शोच्यमिति पिण्डितार्थः । शोच्यत्वं च निकृष्टाश्रयणादिति भावः ॥

Two things have now gone to a lamentable state, by their soliciting the company of Kapālin ( i. e. S'iva ), [ one ] the well-known ( सा ) resplendent digit of the moon ( lit., one possessed of digits ) and [ the other ] you [ the veritable ] moon-light to the eyes of the world.—71.

'कन्या वरयते रूपं माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥' इति लोकानामाभाणकम् । तत्र किंचिदपि नास्तीत्याह—

**वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।**
**वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥७२॥**

वपुरिति ॥ वपुस्तावदस्य विरूपाणि विकृतरूपाण्यक्षीणि नेत्राणि यस्य तद्विरूपाक्षम् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । वैरूप्यं च त्रिनेत्रत्वादिति क्षीरस्वामी । अतो न सौन्दर्यवार्तापीत्यर्थः । अलक्ष्यमज्ञातं जन्म यस्य तस्य भावस्तत्ता । कुलमपि न ज्ञायत इत्यर्थः । 'अलक्षिता जनिः' इति पाठे जनिरुत्पत्तिरलक्षिता न ज्ञाता । 'जनिरुत्पत्तिरुद्भवः' इत्यमरः । वसु वित्तं दिगम्बरत्वेनैव निवेदितम् । नास्तीति ज्ञापितमित्यर्थः । यदि वित्तं भवति तदा

कथं दिगम्बरो भवति । अतो ज्ञेयं निर्धनोऽयमिति । किंबहुना हे बालमृगाक्षि पार्वति, वरेषु वोढृषु 'वरौ जामातृवोढारौ' इति विश्वः । यद्रूपवित्तादिकं मृग्यते कन्यातद्बन्धुभिरन्विष्यते तत्त्रिलोचने त्र्यम्बके व्यस्तम् । एकमपि समस्तं मा भूदिति भावः । अस्ति किम् । नास्त्येवेत्यर्थः ॥

"A body possessed of deformed eyes, condition of birth being unknown, wealth made known by his being possessed of the quarters as garments, oh fawn-eyed *one*, does that exist even singly ( *vyastam* ) *in the three-eyed god*, which is [ *generally* ] *sought* [ *in a collected form* ] in [the, case of ] *bridegrooms* ?—72

निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ॥७३॥

निवर्तयेति ॥ अस्मादसदीप्सितादनिष्टमनोरथान्मनो निवर्तय निवारय । सा पूर्वोक्ता विधा प्रकारो यस्य तथोक्तः । अमङ्गलशील इत्यर्थः । क्व । महदन्तरमित्यर्थः । पुण्यलक्षणा प्रशस्तभाग्यचिह्ना त्वं च क्व । अतो न तवायमर्ह इत्यर्थः । तथाहि । साधुजनेन । 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत्' इति विश्वः । श्मशानशूलस्य श्मशानभूमिनिखातस्य वध्यशङ्कोर्वैदिकी वेदोक्ता यूपो नाम पशुबन्धनसाधनभूतः संस्कृतदारुविशेषस्तस्य सत्क्रिया प्रोक्षणाभ्युक्षणादिसंस्कारो यूपसत्क्रिया नापेक्ष्यते नेष्यते । यथा श्मशानशूले यूपसत्क्रिया न क्रियते तथा त्वमपि तस्मै न घटस इति तात्पर्यार्थः ॥

"Turn away [ your ] mind from this improper desire. Where is he of that sort, and where [ are ] you, possessed of blessed signs ? The honour [ by way of *consecration* ] of a sacrifical post ( *yūpa* ) *in keeping with the rules of Veda*, is not expected by the good *in case of* [ *an iron* ] *stake in the cemetary.* "—73.

इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥७४॥

इतीति ॥ इत्येवंप्रकारेण द्विजातौ द्विजे प्रतिकूलवादिनि सति प्रवेपमानेन चञ्चलेनाधरेणाधरोष्ठेन लक्ष्योऽनुमेयः कोपः क्रोधो यस्यास्तथोक्तया तया पार्वत्या प्रान्तलोहिते प्रान्तरक्ते. विलोचने विकुञ्चिते कुटिलिते भ्रूलते यस्मिंस्तत्तथा । सभ्रूभङ्गमित्यर्थः । तिर्यक्साच्याहिते निहिते । अनादरात्तिर्यगीक्षितेत्यर्थः ॥

While the twice-born one was talking unfavourably, in this way, by her whose wrath could be inferred, from the excessively throbbing lower lip, were cast askance (*tiryak*), her eyes red at the corners, in a manner in which her creeper like eye-brows were knit.—74.

**उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।**
**अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ७५**

उवाचेति ॥ अथैनं ब्रह्मचारिणमुवाच च । किमिति । परमार्थतस्तत्त्वतो हरं न वेत्सि न जानासि नूनम् । कुतः । यतो मामेवमुक्तरीत्याऽऽत्थ ब्रवीषि । 'ब्रुवः पञ्चानामादितः—' इति रूपसिद्धिः । अज्ञानादेवायं शिवद्वेषस्तवेत्याशयेनाह—मन्दा मूढाः । 'मूढाल्पापटुनिर्भाग्या मन्दा.' इत्यमरः । लोकसामान्यमितरजनसाधारणं न भवतीत्यलोकसामान्यमचिन्त्यहेतुकं दुर्बोधकारणकं महात्मनां चरितम् । द्विषन्ति हेत्वपरिज्ञानाद्दूषयन्ति । विद्वांसस्तु कोऽप्यत्र हेतुरस्तीति बहु मन्यन्त इत्यर्थः ॥

And she thus spoke to him "indeed (*nūnam*) you do not know Hara truly, whence you address me thus; the dull-witted hate the conduct of the high-souled which is not common with [ that ] of ordinary run of people and which has a cause that is inscrutable.—75.

संप्रति 'अमङ्गलाभ्यासरतिम्' (५।६५) इत्याद्युक्तं दूषणजातम् 'विपत्' इत्यादिभिः षड्भिः श्लोकैः परिहर्तुमारभते—

**विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।**
**जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ७६**

विपदिति ॥ विपत्प्रतीकारपरेण । अनर्थपरिहारार्थिनेत्यर्थः । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः । भूतिसमुत्सुकेनैश्वर्यकामेन वा मङ्गलं गन्धमाल्यादिकं निषेव्यते । शरणे रक्षणे साधुः शरण्यः । 'तत्र साधुः' इति यत्प्रत्ययः । 'शरणं गृहरक्षित्रोः' इत्यमरः । जगतः शरण्यस्तस्य जगच्छरण्यस्य निराशिषो निरभिलाषस्य सतः शिवस्य । 'आशीरुरगदंष्ट्रायां विप्रवाक्याभिलाषयोः' इति शाश्वतः । आशया तृष्णयोपहता दूषितात्मवृत्तिरन्तःकरणवृत्तिर्येषां तैरेभिर्मङ्गलैः किम् । व्यर्थैरित्यर्थः । पूर्वं मङ्गलमित्येकवचनस्य जात्यभिप्रायत्वादेभिरिति बहुवचनेन परामर्शो न विरुध्यते । दृष्टाद्यनिष्टपरिहारार्थिनो हि मङ्गलाचारनिर्बन्धः । तदुभयासंस्पृष्टस्य तु यथाकथंचिदास्ताम् । को दोष इत्यर्थः । एतेन 'अमङ्गलाभ्यासरतिम्' ( ५ । ६५ ) इत्युक्तं प्रत्युक्तम् ॥

" An auspicious thing is resorted to [ either ] by one bent on counter-acting a calamity, or by one who longs for prosperity ( bhūti ). Of what use, to one who is the refuge of the world, and [ who is ] without any desires, are these [ things ] which affect ( or taint ) the operations ( वृत्ति ) of [ one's ] mind by creating longings ?—76.

अकिंचनः सन्प्रभवः स संपदां त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥७७॥

अकिंचनेति ॥ स हरः । न विद्यते किंचन द्रव्यं यस्य सोऽकिंचनो दरिद्रः सन् । संपदां प्रभवत्यस्मादिति प्रभवः कारणम् । पितृसद्मगोचरः श्मशानाश्रयः सन् । त्रयाणां लोकानां नाथः । 'तद्धितार्थ–' इत्यादिनोत्तरपदसमासः । स देवो भीमरूपो भयंकराकारः सन् । शिवः सौम्यरूप इत्युदीर्यते उच्यते । अतः पिनाकिनो हरस्य यथाभूतोऽर्थो यथार्थस्तस्य भावो याथार्थ्यं तत्त्वं तस्य विदो न सन्ति । लोकोत्तरमहिम्नो निर्लेपस्य यथाकथंचिदवस्थानं न दोषायेति भावः । एतेन 'अवस्तुनिर्बन्धपरे' ( ५।६६ ) इति परिहृतं वेदितव्यम् ॥

"*He is the source of [ all ] riches [ though ] himself penniless ( lit:-though possessed of naught ). [ He is ] the lord of the three worlds, [ though ] always found in the*

cemetary [ lit.,–the home of the manes ]. He is declared [ to be ] gentle ( S'ıva ) though possessed of a terrible form. Knowers of the holder of Pināka, ( i. e. S'ankara ) as he actually is, there are none.—77

देवस्य लौकिकमलौकिकं च प्रसाधनं नास्तीत्याशयेनाह—

**विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।**
**कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥७८॥**

विभूषणेति ॥ विश्वं मूर्तिर्यस्येति विश्वमूर्तेरष्टमूर्तेः शिवस्य वपुः शरीरं भूषणैरुद्भासत इति भूषणोद्भासि स्यात् । पिनद्धभोगयामुक्तभुजंगमं वा स्यात् । पिनद्धेति नह्यतेरपिपूर्वात्कर्मणि क्तः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः । गजाजिनालम्बि स्यात् । अथवा दुकूलधारि स्यात् । कपालमस्यास्तीति कपालि ब्रह्मशिरः कपालशेखरं वा स्यात् इन्दुशेखरं वा स्यात् । नावधार्यते न निर्धार्यते । सर्वं संभवतीत्यर्थः । एतेन 'त्वमेव तावत्' (५ । ६७) इति श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम् ॥

"The body ( of him ) with [ the entire ] universe for his form, cannot be apprehended. [ It may be ] radiant on account of ornaments or entwined with serpents. [It may be] wearing the elephant hide, or putting on silken garment. [ It may be ] possessed of a skull or of the moon on the crest.—78

'अयुक्तरूपं किमतःपरं वद' (५ । ६९) इति श्लोकोक्तं प्रत्याह—

**तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्म रजोविशुद्धये ।**
**तथाहि नृत्याभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसाम् ॥७९॥**

तदिति ॥ तस्य शिवस्याङ्गं तस्य संसर्गमवाप्यास्राव चिताभस्मैव रजोविशुद्धये कल्पते । अलं पर्याप्नोतीत्यर्थः । अलमर्थयोगात् 'नमःस्वस्तिस्वाहा–' इत्यादिना चतुर्थी । ध्रुवं शोधकत्वम् । प्रमाणसिद्धमित्यर्थः । प्रमाणमेवाह—तथाहि । प्रसिद्धमेवेत्यर्थः । नृत्ये ताण्डवे योऽभिनयोऽर्थव्यञ्जकचेष्टाविशेषः स एव क्रिया तया निमित्तेन च्युतं पतितम् । चिताभस्मरज इति शेषः । अम्बरौकसां देवानां

मौलिभिर्विलिप्यते ध्रियते । अशुद्धं चेत्कथमिन्द्रादिभिर्ध्रियतेत्यर्थापत्तिरनुमानं वा प्रमाणमित्यर्थः ॥

"Indeed [ even ] the particles of ashes from the funeral *pyre, are capable of sanctification, after having obtained* the contact with his body. For, it is well known ( tathāhi ) [ that the particles of dust ] that drop down in the acts of exihibiting gestures in the dances, are borne on ( lit.,-by ) their heads by the gods ( lit., by those who ) have heaven *as their abode.*—79

यदुक्तम् 'दिगम्बरत्वेन निवेदितं वसु' (५।७२), 'इयं च तेऽन्या पुरतो विडम्बना' (५।७०) इत्यादि च तत्रोत्तरमाह—

**असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।**
**करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥८०॥**

असंपद इति ॥ प्रभिन्नो मदस्रावी दिग्वारणो दिग्गजो वाहनं यस्य सः ऐरावतेनोढ इत्यर्थः । वृषा देवेन्द्रोऽसंपदो दरिद्रस्य वृषेण गच्छतो वृषभारूढस्य तस्येश्वरस्य पादौ मौलिना मुकुटेनोपगम्य । प्रणम्येत्यर्थः । विनिद्राणां विकसितानां मन्दाराणां कल्पतरुकुसुमानां रजोभिः परागैररुणा अङ्गुलयो ययोस्तौ तथोक्तौ करोति । दिग्गजारोहिणामिन्द्रादीनामपि वन्द्यस्येन्दुमौलेः किं संपदा, वृषारोहणे वा को दोष इत्यर्थः ॥

"Indra, who has for his vehicle the quarter-elephant in ichoral exudation ( prabhinna ), *having approached,* with his head ( i. e. having prostrated himself at ) the feet of him, who is penniless, and who moves about on the bull, makes ( them i. e. the feet ) possessed of toes reddish with the pollen of the full-blown Mandāra-flowers.—80

यदुक्तम् 'अलक्ष्यजन्मता' (५।७२) इति तत्रोत्तरमाह—

**विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् ।**
**यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ८१**

